# श्रीमन्महाराज
# संस्कृत महापाठशाला पत्रिका

त्रैमासिकी

सम्पुटम् ६] जनवरि १९२० [सञ्चिका १

सम्पादकः

एम्. योगनरसिंहार्यः, एम्. ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः.




मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९२०

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.
   विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः( रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः, डाक्टर् आर्. शामशास्त्रिणः
   बि.ए., पिएच्. डि., एं. आर्. ए. एस्., विश्रान्त मैसूरु
   प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु
   महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचल-
   शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासा-
   चार्याः, विश्रान्त महापाठशाला विशिष्टाद्वैत वेदान्त प्रधा-
   नोपाध्यायाः

६. महामहोपाध्याया विद्यानिधयः ब्र.श्री. विरूपाक्षशास्त्रिणः महा-
   पाठशालायामद्वैतवेदान्त प्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. के. गोपालकृष्णशास्त्रिणः, महापाठशाला
   साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए., महापाठशालाध्यक्षाः
   (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल्. हरियप्पाः, एं.ए., महापाठशालोपाध्यायाः

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा।<br>
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥<br>
न हीदृशं संवननं त्रिषु लोकेषु विद्यते।<br>
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.

३. विभिन्नदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः. मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं॰ समाः "

(ईशोपनिषत्)

सम्पुटम् ६]  जनवरि-१९३०  [सञ्चिका १

तां भवानीं भवानीतक्लेशनाशविशारदाम् ।
शारदां शारदाम्भोदसितासिंहासनां नुमः ॥

(वल्लभदेवः)

केदानीं दर्पितास्ते धनमदमदिरामोदिनो दिग्द्विपेन्द्राः
हे मेरो मन्दराद्रे मलय हिमगिरे साधु वः क्ष्माधरत्वम् ।
शेष श्लाघ्योऽसि दीर्घैः पृथुभुवनभरोच्चण्डशौण्डैश्शिरोभिः
शंसन् सोत्प्रासमुच्चैरिति धरणिभृतः पातु युष्मान् वराहः॥

(मनोरथः)

लघीयः प्राज्यं वा फलमभिमतं प्राप्तुमनसा
निरीहेण स्थातुं क्षणमपि न युक्तं मतिमता ।
कुलालो दंडेन भ्रमयति न चेच्चक्रमनिशं
शरावः कुंभो वा न हि भवति सत्यामपि मृदि ॥

(हरिभट्टः)

## श्रीशारदास्तोत्रचतुष्टयम्

नमामि शारदादेवीं शृंगगिर्यधिदेवतां ।
यत्कृपाधीनमखिलं धनं ज्ञानं यशो विदुः ॥

पक्षिष्वक्षीणबुद्धिर्वदति भुवि शुकस्त्वत्करस्पर्शपुण्यात्
त्वत्पाणिस्पर्शलाभात् क्वणति च मधुरं दारुदंडस्थतंत्री ।
एवं जाते सुजाते भगवति महिते भारति त्वत्कटाक्षः
स्याच्चेन्नृणामकस्मादुपरि न हि परं वाच्यमेतन्महिम्नि ॥ २

शारदांब तव भूरिमहिम्नः पारदर्शनकथा भुवि नैव ।
यत्त्वदीयरथबर्हिणबर्हं शौरिरप्यकलयन्निजशीर्षे ॥ ३

सारस्वतो लगति यत्र जने कटाक्षः
सारस्वतो भवति वाचि जनस्य तस्य ।
संपद्यतेप्सितममुष्य सहैव कीर्त्या
संपद्यते तदिह तां गिरमाश्रयेऽम्बाम् ॥ ४

## अ न ङ्गः.

अष्टौ कुचेष्टाश्चरणेन पंगोः
काणस्य दृग्भ्यां बहुधेति गाधा ।
अनंगतामेव समेयुषस्ते
सख्याः कथं मार भवंति चेष्टाः ॥

जग्गु शिंग्रय्यङ्गार्यः.

## कुवलयानन्दे पाठसंशोधनम्

---

I

चतुरधिकाशीतिप्रबंधनिर्माणधुरीणाः सर्वतंत्रस्वतंत्राः वाजपेयादि-महायागाद्यनुष्ठानसंपादितसमज्ञावळक्षीकृतजगततिलाः श्रीमदप्पय्य-दीक्षिताः आलंकारिकग्रन्थेषु ललितचुंचुं चन्द्रालोकं दशमयूखमंडितं संमान्य पञ्चममयूखस्थं अर्थालंकारप्रकरणमुपजीव्य क्वचिल्लक्षणश्लोकं, क्वचिल्लक्ष्यश्लोकं, क्वचिदुभयं च. प्राच्यनव्यमतपरीक्षणपूर्वकं अन्यथा विरचय्य सकलरसिकस्वांतसमुल्लाससुंदरं कुवलयानंदं समग्रश्नन्निति विदितमेव सहृदयधुर्यानां ।

अस्मिंश्च कुवलयानन्दे नैषध-शिशुपालवध-कुमारसंभवादिमहा-काव्येभ्यः, अलंकारसर्वस्व-काव्यप्रकाशैकावळ्यादिप्राचीनलक्षणग्रन्थे-भ्यश्च उद्धृतान्यनुगुणानि लक्ष्यपद्यान्यप्युदाहार्षुरिति च विश्रुतमेव। मुद्रणाभावदशायां लेखकप्रमादादिना प्राच्यताळपत्रत्रोटनादिना च बहवः पाठभेदाः चन्द्रिकादिव्याख्याकरणसमय एवोपालभ्यन्तेति च चन्द्रिकारसिकसञ्जीविन्यादिव्याख्यापरिशीलयितॄणां स्पष्टम्—प्रेक्षाव-दध्येतृपरम्परायां ते च पाठभेदाः प्रायः संशोधिता एव दरीदृश्यन्ते। कुम्भकोण—मद्रपुरी—निर्णयसागरादिषु मुद्रापितकुवलयानन्दकोशेषु बह-वोऽशुद्धपाठा उपलभ्यन्ते । तांश्च आकरग्रन्थावलोकनादिना प्राच्य-कोशागारस्थलिखितपुस्तकदर्शनादिना च संस्कर्तुं प्रयतमानाः प्राज्ञाः प्रत्यक्षीक्रियन्ते ।

श्रीमन्महीशूरनगरीमध्याविद्योतमानसंस्कृतमहापाठशालायां श्री-राजाधिराजकृष्णराजेन्द्रकटाक्षनिरीक्षितायां पाठशालासाहित्यप्रधानोपा-ध्यायविश्रुतहासनाभिजननृसिंहशास्त्रिमहाविद्वत्साहाय्येन धर्माधिकारिभिः

प्रथितख्यातिभिश्चक्रवर्त्यय्यंगार्यमहाशयैः स्वीयविद्यातरंगिणीमुद्राशालायां संमुद्रितस्य कुवलयानंदपुस्तकस्य अवलंबनादिना विशुद्धपाठवत्वेन बालास्सुशिक्षिता वर्तंत इत्यत्र न कोपि द्वापरः। परं तु निर्णयसागरादिसम्मुद्रित-कोशेषु बहवः च्युतसंस्कृत्यादिदोषदूषिताः पाठा लक्ष्यमाणा आसत इति तत्संशोधनमवश्यं विमृश्यमिति उद्यानपत्रिकायां प्रतिमासं परिष्कृताः पाठाः सोपपत्तिकं प्रदर्श्यंत इति सहृदयानाममंदानंदनिष्यंदः। यथा—

"अंकं केऽपि शशंकिरे जलनिधेः पङ्कं परे मेनिरे सारंगं कतिचिच्च संजगदिरे" इत्यत्र संजगरिर इति पाठः प्रशस्य इत्यत्र उपपत्तिः दर्शिता। एतादृशाशुद्धिनिरासनपूर्वकं परिष्कृताः पाठाः महीशूर-सम्मुद्रितपुस्तके बाहुल्येन दृश्यंते। तांश्च सुसंस्कृतपाठान् उद्यान-पत्रिकायामसंमुद्रितान् कांश्चन प्रदर्शयिष्यामः।

(१) परिकरालंकारलक्ष्यत्वेनोदाहृते 'व्यास्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मीकतो नाभौ नाभवमच्युतस्य सुमहद्भाष्यं न चाभाषिषं' इतिपद्ये अभाषिषीति पारिनिष्ठिततिङन्तप्रयोग आवश्यकः, भाषतेरात्मनेपदित्वात्॥

(२) पर्यायोक्त्यलंकारे 'रात्रिश्शिवा काचन सन्निधत्ते विलोचने जाग्रतमप्रमत्ते' इत्यत्र जागृतमिति वर्तितव्यं, जागृधातोः लोटि मध्यमपुरुषद्विवचने जाग्रतमित्यस्य शशविषाणायमाणत्वात्॥

(३) प्रहर्षणालंकारे 'उज्झित्य प्रथममधःस्थितमिति श्लोके उज्झधातोरनुपसृष्टात् क्त्वः ल्यबादेशाभावात् उज्झित्वा प्रथमामिति पठनीयम्। उच्छित्य प्रथमामिति पाठान्तरं चास्ति॥

विद्यातरंगिणीसम्मुद्रितकोशेऽपि आकरग्रंथावलोकनादिना केचन पाठः परिष्करणीया इत्येतदधुना प्रदर्श्यते॥

(१) ‘ कवीन्द्राणामासन् प्रथमतरमेवाङ्गणभुवः ।

चलद्भृंगासंगाकुलगजमदामोदमधुराः ॥

अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः ।

कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥

इतिपद्यं अत्यंतातिशयोक्तेर्लक्ष्यत्वेनोदाहारि । अत्र रुद्रनृपतेरित्यनेन प्रतापरुद्रीयमिदं पद्यं स्यादिति प्रेक्षकाणां स्वांते स्वरसतस्संदेह उदेति । विद्याधरेणायं च श्लोकः एकावळ्यां अतिशयोक्त्यलंकार-लक्ष्यत्वेन ग्रथितः । तत्र च रुद्रनृपतेरित्यस्य स्थाने ‘वीर भवतः’ इति पाठः प्रेक्ष्यते । च्युतसंस्कृत्यादिदोषाभावेन पाठ-परिवर्तनावश्यंभावाभावेपि ग्रन्थकृद्वृत्तिस्वारस्यानुगुण्येन पाठः परिष्क-रणीय इति भाति । तत्र च एकावळ्यां २८६ पृष्ठे ‘ अत्र कविकुलै-श्वर्यरूपकार्यानंतरं नृसिंहनृपावलोकनलक्षणं कारणमुपात्तं’ इति संगमन-ग्रंथेन नृसिंहनृपोल्लेखनात् वीरभवत इत्येव पाठः शोधयितव्यः ॥

तस्य विध्याधरकवेः—

अंतरेण नरसिंहभूपतिं नेतरोऽस्ति मम वाङ्मयोचितः ।

चन्द्रचूडमपहाय जाह्नवीवारि वोढुमपरः क ईश्वरः ॥

इति नृसिंहराजवर्णनैदंपर्यस्य स्पष्टं भानात् । तर्हि अत्रापि श्लोके नृसिंहराजबोधकशब्दाः नृसिंहाक्षितींद्रेत्यादय आवश्यका इति चेन्न । एकावळ्युद्धृतानां आसन्नविंशानां कुवलयानंदोदाहृतानां श्लोकानां मध्ये, ‘पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर’ ‘वीर भवतः प्रौढाहवाडंबरं’ इत्यादिश्लोकेषु केवलं ‘वीर’ शब्दसंबोधनाभ्यासादिति सुधियः स्वांते समालोचयंतु ।

(२) “ मालिन्यमब्जशशिनोः मधुलिट्कळंकौ

धत्तो मुखे तु तव द्यक्तिलकांजनाभाम् ।

दोषावितः क्व चन मेळनतो गुणत्वं

वक्तुर्गुणौ हि वचने भ्रमविप्रलम्भौ" ॥

इतिश्लोके ह्क्तिलकात्मनेति उद्यानपत्रिकायां प्रकाशितं परिष्कृतपाठं सप्रमोदं परिगृह्णीमः । परारीमं देशमलंकृतवता केरळीयेनालंकारिकनदीष्णेन साकं संभाषमाणैरस्माभिरपि 'तिलकात्मनाभा' मिति पाठस्सानंदमादृतः। परं तु उत्तरार्धे 'वक्तुर्गुणौही' त्यत्र वक्तुर्यथेशेति पाठः परिष्करणीयः इति संप्रति आवेदयामः । यतो हीदं पद्यं अप्पदीक्षितवरदराजस्तवे नवतितमत्वेन लक्ष्यते । अत्र ईशेति संबोधनं वरदराजस्तवीयेषु बहुषु श्लोकेषूपलभ्यते । यथेत्युपमाबोधकं । अयमेव पाठः रसिकरंजनीकारस्यापि सम्मत इति भाति । तदीये च व्याख्याने 'यथा विप्रलंभकः सत्येव सद्मनि देवदत्ते स तत्र नास्तीति भ्राम्यन् स्वज्ञातविपरीतार्थबुबोधयिषारूपविप्रलंभेन सद्मनि देवदत्तोऽस्तीति परं बोधयति। तद्वाक्यं विषयाबाधात्प्रमाणमेवेति भ्रमविप्रलंभयोः गुणभावः उपमारीत्या समर्थित' इत्यस्ति। वक्तुः वचने भ्रमविप्रलंभौ यथा गुणत्वं गुणभावं इतः भजत इत्यन्वयोऽपि दर्शितः। पुनः गुणशब्दप्रयोगे आलंकारिकमर्यादा बाध्येत। पूर्वश्लोके कर्णारुंतुदमित्यत्र अर्थांतरन्यासविधया समर्थनं। अत्र श्लोके उपमारीत्या समर्थनमिति मूलस्वारस्यं चानुसृतं भवति। अतः मालिन्यमब्जशशिनोरिति श्लोके (वरदराजस्तवे ९० श्लो) उत्तरार्धे—

दोषावितः क्व चन मेळनतो गुणत्वं।

वक्तुर्यथेश वचने भ्रमविप्रलंभौ ॥

इति पाठः सर्वैस्सादरमादरणीय इति विज्ञापयति रसिकजनवशंवदः।

के. गोपालकृष्णशास्त्री.

## अंधबालकः

('ब्लैण्ड् बाय्') इत्याख्यस्य आङ्लकाव्यस्य परिवर्तनरूपः)

---

भो भो वद वद किं तत्तेजः

जाने यस्य कदापि न सौख्यम् ।

काऽभ्युपपत्तिः प्रभया दृष्टेः

काणोऽहं भो वद दयनीयः ॥ १

वदसि त्वं मे चित्रविचित्रान्

पश्यामीति च दिव्यत्सूर्यम् ।

औष्ण्यानुभवाज्जाने स कथं

दीप्तं दिवसं कुरुते च निशाम् ॥ २

कलये दिवसं स्वयमेवाहं

क्रीडाकाले रात्रिं स्वापे ।

नित्यं स्यान्मे दिवसस्स तदा

यद्यनिशं मे जागरशक्तिः ॥ ३

निश्वासांस्त्वं मुंचसि दीर्घान्

दुर्गत्यै मे शोचसि बहुधा ।

शांतिं मामकचित्तं धत्ते

नष्टं यस्मान्न हि जानीते ॥ ४

यं लब्धुं न हि शक्यस्स च मां

संतापयितुं प्रभवो मा भूत् ।

राजाहं स्यां गायन्नेवं

बालवराकोऽप्यक्षिविहीनः ॥ ५

एच्. वि. नारायणः,

विद्यार्थी.

# वालिवधन्यायदृढमञ्जूषा

(अनुवृत्ता)

---

यदुक्तं "अहं चैव स रामश्च सुग्रीवं शरणं गतौ" इत्यादिना तत्प्रतिपादितमिति ॥ तन्न ॥ एषां वाक्यानां लक्ष्मणेनैव प्रयुक्तत्वात्तथान्यत्र क्वापि रामेणाप्रयुक्तत्वाच्चैतैर्वचनै रामस्य सुग्रीवं प्रति शरणागतत्वकल्पकत्वायोगात् ॥ न च तेषां वाक्यानां लक्ष्मणेनोक्तत्वेपि तस्य रामाप्तत्वेन तदुक्तवाक्यानां तत्कल्पकत्वं युज्यत एवेति वाच्यम् । शरणागतिविषयकवाक्यप्रयोगस्य करुणारसाविर्भावद्वारा स्वाभीष्टप्रापकानुग्रहप्रयोजकत्वमिति सर्वैरभ्युपगतत्वेन तत्र परेण प्रयुज्यमानानां तेषां करुणारसाविर्भावाननुगुणत्वेन तदभीष्टार्थप्रापकानुग्रहप्रयोजकत्वायोगात्॥

यदि तेषां तत्प्रयोजकत्वमभ्युपगम्यते लोके अनेककार्यासक्तानां राज्ञामन्येषां च स्वाभीष्टसिद्ध्यै अन्यैः देवालयादिषु देवतानां पूज्यमानत्वात् । तत्पूजनेन स्वाभीष्टार्थसंपादकतद्देवतानुग्रहस्य प्रसिद्धत्वात्, दृष्टत्वाच्चेत्युच्यते—तदा "अहं चैव स रामश्च" इति वाक्यस्थस्यैवकारस्य अहमित्यत्रान्वयेन अहमेव शरणं गतः सुग्रीवमिति, रामश्चेत्यत्र चशब्दस्य तुशब्दार्थकत्वेन रामस्तु सुग्रीवं गतः प्राप्त इत्यर्थ इति नानुपपत्तिः । न च "अहं चैव स रामस्तु" इत्येव वाच्ये स रामश्चेत्युक्तेश्चशब्दः न तुशब्दार्थक इति वाच्यम् । अहं चैवेत्यारंभानुगुण्येन चशब्दप्राससंपत्तये तथोक्तेः । अत एव—

"सीता यस्य स्नुषा चासीच्छरण्यो धर्मवत्सलः
तस्य पुत्रः शरण्यस्य सुग्रीवं शरणं गतः ॥"

इत्युक्तौ पुत्र इत्येवोक्तं न तु—

"शरण्यस्य सुतो रामः सुग्रीवं शरणं गतः।"

इति रामस्य शरणागतत्वबोधकं रामशब्दघटितं वाक्यं प्रयुक्तम्। न च पुत्र इत्यनेन रामस्यापि प्रतीतेस्तस्य शरणागतत्वमनेनोच्यत इति वाच्यम्। अपूर्वार्थकल्पनापेक्षया पूर्वोक्तार्थस्यैव अनुवादकत्वे लाघवात्। यदपि—

"सर्वलोकस्य धर्मात्मा शरण्यः शरणं पुरा।
गुरुर्मे राघवः सोऽयं सुग्रीवं शरणं गतः॥"

इत्युक्तौ मे गुरुः सोऽयं राघव इत्यनेन रामस्यैव प्रतीत्या राम एव शरणं गत इति बोध्यते इत्युक्तम्। तदपि न त्वदुक्तार्थसाधकम्। यतः पुरा यः धर्मात्मा सर्वलोकस्य रक्षणे साधुश्शरणं रक्षकश्चाभूत्सोऽयं शरणं-रक्षकः मे गुरुः सुग्रीवं गतः प्राप्त इत्यर्थात्।

यदपि—

"येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः।
मानिताः सततं राज्ञा सदा दशरथेन वै॥
तस्यायं पूर्वजः पुत्रस्त्रिषु लोकेषु विश्रुतः।
सुग्रीवं वानरेंद्रं तु रामः शरणमागतः॥"

इत्युक्तम्। तस्यायं पूर्वजः (नत्वनुजलक्ष्मणः) रामः सुग्रीवं शरणमागत इति तदर्थः। तदपि न। शरणं-रक्षकः रामः सुग्रीवमागत इत्यर्थात्। अन्यथा—

"शरणं वानरेंद्रं तु रामः सुग्रीवमागत"।

इत्येव ब्रूयात्। एतेन—

"तपसा सत्यवाक्येन वसुधा येन पालिता।
स्त्रीहेतोस्तस्य पुत्रोऽयं रामोऽरण्यं समागतः॥

तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ।
रावणेन हृता भार्या स त्वां शरणमागतः" ॥

इत्यपि व्याख्यातम् । त्वामागतः सः शरणं ते इत्यर्थात् । अनेन वाक्येन हनूमता मन्त्रिणा राज्यभार्याप्राप्तिकालसान्निध्यसूचनेन सुग्रीवः प्रोत्साहितः । अत एव—दशरथं प्रशस्य—

"तस्यायं पूर्वजः पुत्रः रामो नाम जनैः श्रुतः ।
शरण्यः सर्वभूतानां पितुर्निर्देशपारगः ॥"

इति (श्रीमद्रामायणे ४।४।८) रामस्य सर्वभूतशरण्यत्वोपपादनं युज्यते । यदपि—

"शोकाभिभूते रामे तु शोकार्ते शरणं गते ।
कर्तुमर्हति सुग्रीवः प्रसादं हरियूथपैः ॥"

इति । तदपि न । सीतावियोगेन लोकैकवीरे मयि तिष्ठति मद्भार्या रावणेन हृतेत्यपयशःप्राप्तया च यश्शोकः तेन अभिभवं प्राप्ते रामे (रामविषये) यः शोकार्तः त्वां सुग्रीवं शरणं गतश्च लक्ष्मणः तस्मिन् प्रसादं (प्रसन्नतां) भ्रातरि रामे त्वदीयैर्हरियूथपैः भार्यान्वेषणादिद्वारा शोकानाविष्टे सति ममापि प्रसन्नता (विमलचित्तता) स्यान्नान्यथेति तत्कार्यं सुग्रीवः कर्तुमर्हतीति लक्ष्मणोक्तिर्नरामोक्तिरित्यदोषात् । एतेन शोकाभिभूते इत्यनेनैव सिद्धे पुनः शोकार्ते इति विशेषणं चिन्त्यमित्यपास्तम् ॥

किंच रामस्य सुग्रीवं प्रति शरणागतत्वे वालिनः रामस्वामित्वेन रामस्य सुग्रीवभृत्यत्वेन तदाज्ञावशंवदेन रामेण ।

"वालिनं तं वधिष्यामि तव भार्यापहारिणम् ।"

इति (श्रीमद्रामायणे ४।५।२६) कृतप्रतिज्ञायाः (तदाज्ञाभ्युपगमसमयप्रयुक्तस्य वाक्यस्य) अनुरोधादवश्यं कर्तव्यो वालिवधः यथाकथंचिद-

नुष्ठितो भृत्येनानेनेति सामंजस्ये (श्रीमद्रामायणे ४।१७–१८ सर्गयोः) वालितारांभ्यां कृतानामाक्षेपाणां महता समारंभेण रामेण कृता समाधानपरम्परा कथमुपपद्यते। मम तु स्वानपराधिनामारण्यकगजव्याघ्रादीनां मृगयायां परोक्षे प्रत्यक्षे च शरादिभिर्हननवत्, स्वानपराधिनां प्रत्युत स्वोपकारिणां दुर्दमानडुन्महिषाणां शकटवहनेन गमनसमयादौ दण्डेन हननवत्, स्वानपराधिनः बलिचक्रवर्तिनः कुटिलप्रवृत्तेन वामनेन निग्रहवत्, शुक्राचार्योक्त्या कुटिलपथेन प्रवृत्तं वामनं जानतापि बलिचक्रवर्तिना प्रतिज्ञातार्थनिर्वाहाय त्रिविक्रम (भू) दानवत्, स्वानपराधिनां कौरवाणां नाशे पराङ्मुखस्याप्यर्जुनस्य युद्धे श्रीकृष्णेन बलात्कारेण नियोजनेन तेषां नाशनवत्, स्वानपराधिनां स्वेन गङ्गायामुत्पादितानां बहूनां पुत्राणां स्वकृतप्रतिज्ञानुरोधाच्छंतनुकृतनाशवत्, स्वानपराधिन्याः स्वमातुः रेणुकायाः पितरं प्रति स्वकृतप्रतिज्ञानुरोधात् शिरश्छेदवत्, स्वानपराधिनो ग्राहस्य गजेन्द्ररक्षणाय भगवता हननवत् स्वानपराधिनः वालिनः परोक्षं रामेण वधः कृत इति दिक्॥

एतेन शरणागतसुग्रीवरक्षणाय वाली न हतः। किंतु सीतान्वेषणादिकार्यकारिणः सुग्रीवस्य सर्वतः संचारप्रतिबन्धकं यद्वालिभयं तथा सीतान्वेषणतन्निवस्थानतद्वृत्तान्तश्रवणोत्तरं रावणेन तत्सैन्यैश्च सह प्रवृत्तयुद्धसमये सख्युः रावणस्य सहायतया लङ्कायां युद्धरङ्गमागते वानरसेनानायकस्य सुग्रीवस्य ऋश्यमूकं प्रति पलायनमेव, तथा शत्रोरर्धबलाकर्षककांचनकमलमालाधारिवालिसहायोपेतस्य रावणस्याजय्यतां, प्रथमं कांचनकमलमालां छित्वा कृते युद्धे बहुक्लेशेन कदाचिज्जये सत्यपि वनवासार्थं नियतचतुर्दशवर्षातिक्रमाद्भरतस्याग्निप्रवेशः स्यादित्यादिकं पर्यालोच्य न्यायमार्गमतिक्रम्य रामेण वाली निहत इत्यपास्तम्॥

किंच त्वदुक्तस्य रामस्य सुग्रीवं प्रति शरणागतत्वेन तद्भृत्यत्वात्तदाज्ञानुरोधात्कृतस्य वालिहननस्य सामंजस्ये—

" मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ।
मैथिलीमहमेकाह्ना तव चानीतवान् भवेत् ॥
राक्षसं च दुरात्मानं तव भार्यापहारिणम् ।
(सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया) ॥
कण्ठे बद्ध्वा प्रदद्यां ते निहतं रावणं रणे ।
न्यस्तां सागरतोये वा पाताले वापि मैथिलीम् ॥
आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ।
युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि " ॥

इति (श्रीमद्रामायणे ४।१७।४७–५०) सुग्रीवस्नेहात् मद्धननात् वा प्राक् सीतानयनायाहं चोदितस्त्वया स्यां तदा रावणेन नियुध्य तं हत्वा मधुकैटभाभ्यां वा काले निरुद्धां श्वेताश्वतरीरूपां श्रुतिं हयग्रीव इव यत्र कुत्र वा तेन स्थापितां सीतां तुभ्यं दत्त्वा स रावणः मया कण्ठे बद्ध्वा त्वत्समीपे आनीतः स्यात्, सुग्रीवोऽपि मन्मरणोत्तरं किष्किन्धाराज्यादिकं प्राप्नुयात् । परंतु त्वया मैत्रीमकृत्वाऽहं हतः । अतस्तुभ्यमेतद्रूपां सेवां कर्तुं मम समयो न लब्ध इति मदीयदौर्भाग्यमेवैतदिति वालिना कृतं रामे स्वदुःखनिवेदनं कथं संगच्छताम् ॥

किञ्च—

" वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।
वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥
कर्तुमर्हसि मे वीर भयं मे न भवेद्यथा " ।

इति (श्रीमद्रामायणे ४।५।२३–२४) श्रीरामे सुग्रीवेण कृताया अभयप्रार्थनायाः,

प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ।
उपकारफलं मित्रं विदितं मे महाकपे ।
वालिनं तं वधिष्यामि तव भार्यापहारिणम् ॥ "

इति (तत्रैव २५।२६) सुग्रीवं प्रत्युक्तौ मित्रमित्युक्तेश्च सुग्रीवं प्रति रामस्य शरणागतत्वेन तद्भृत्यत्वेनासांगत्यापत्तिः ॥

किंच रामस्य तत्त्वे—

" तं ततः सांत्वयामास सुग्रीवं लक्ष्मणाग्रजः ।
स्त्रीहेतोर्वालिना भ्रात्रा निरस्तं पुरुतेजसा ॥ "

इति (श्रीमद्रामायणे ५।३५। ३४) सांत्वनं कथमुपपद्यताम् ।

नच—

" प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ।
कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ।
अनाथो गतराज्योऽयं रावणेन च धर्षितः ॥
दीनो दूरगृहः कामी मां चैव शरणं गतः ।
इत्येतैः कारणैः सौम्य सुग्रीवस्य दुरात्मनः ।
अहं वानरराजस्य परिभूतः परंतप ॥ "

इति (श्रीमद्रामायणे ४।३०।६६–६८) श्रीरामेणैव सुग्रीवे स्वीयशरणागतत्वादिवृत्तान्तस्य वर्षाकालेऽतिक्रान्तेप्यनागतं सुग्रीवं प्रति लक्ष्मणप्रेषणसामयिकस्य निरूपणेन रामः न सुग्रीवं शरणं गतः किंतु रामं सुग्रीव इत्युच्यत इति वाच्यम् । प्रतिज्ञानुरोधेन तत्कालेऽनागमनात्क्रुद्धेन रामेण सुग्रीवगतदुरभिमानस्वरूपस्य निरूपितत्वात् । अत एव " अभिभूतः " वंचित इत्युक्तम् । अत एव सुग्रीवोऽयं स्वकार्यार्थं मामनुसृत्य स्वकार्यं सम्पाद्य वंचनया दुरात्मा संवृत्त इत्याशयेन दुरात्मन इत्युक्तम् । अत एव—

" कश्शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्मणा ।
ताद्दशं प्रतिकुर्वीत अंशेनापि नृपात्मज ॥ "

इति (श्रीमद्रामायणे ४।३६।६) लक्ष्मणं प्रति सुग्रीवेण कृता रामप्रशस्तिः संगच्छते । अत एव—

" वालिनश्च भयार्तस्य सर्वलोकभयापह ।
कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहात् ॥ "

इति (श्रीमद्रामायणे ४।१९३०) रामस्य सर्वलोकभयापहत्वं स्वस्य वालिभयार्दितत्वादिकं सुग्रीवेणोक्तम् ।

किंच सुग्रीवं प्रति रामस्य शरणागतत्वे सुग्रीवस्य स्वामित्वेन—

" रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ "

इति (श्रीमद्रामायणे ४।५।११) रामं प्रति सुग्रीवेण कृतं पाणिप्रसारणं कथं संगतं स्यात् ॥

ननु त्वन्मतेऽपि रामं प्रति सुग्रीवस्य शरणागतत्वेन सुग्रीवस्य रामभृत्यत्वात्तेन सख्याश्रयणं कथमुपपद्यत इति चेत् शृणु—

" स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ।
शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा ॥
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ।
मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ॥ "

इत्यादिकां दनोः दनुवंश्यस्य (कबन्धस्य) उक्तिं श्रुत्वा राम आह—

" काष्ठान्यादाय शुष्काणि काले भग्नानि कुंजरैः ।
धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ॥
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ।
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥ "

इति । ततः—

" प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ।
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥
यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ।
अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे प्रभो " ॥
" दग्धस्त्वयाहमवटे न्यायेन रघुनंदन ।
वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ॥
तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ।
कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः " ॥

इति मदीयशरीरदाहपर्यंतं शरीरेऽस्मिन् (शापेन कबंधाख्ये शरीरे) त्वदीयसीतापहर्त्रादिज्ञानं नास्ति, दग्धे तु दिव्यशरीरोत्पत्तेस्तेन सर्वं ज्ञात्वा तत्स्थानतदपहर्त्रादिकं वक्ष्यामीति दनुवंश्यवाक्यं श्रुत्वा शरीरे रामलक्ष्मणाभ्यां दग्धे दिव्यं शरीरमुपलभ्य विमाने स्थितेन तेनोक्तं—

" सोऽन्तरिक्षगतो रामं कबंधो वाक्यमब्रवीत् ।
शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते " ।

इत्युक्त्वा—

" श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना " ॥
" भ्रात्रा विवासितो राम राज्यहेतोर्महात्मना (बलः) ।
स ते सहायो मित्रं च सीतायाः परिमार्गणे ॥
भविष्यति हि ते राम मा च शोके मनः कृथाः " ।
" गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ॥
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ।

अद्रोहाय समागम्य दीप्यमाने विभावसौ" ॥

"सन्निधायायुधं क्षिप्रमृश्यमूकालयं कपिम् ।

कुरु राघव सत्येन वयस्यं वनचारिणम्" ॥

इति कार्यसामान्येऽपि चिंतनीये प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावरूपाः संधिविग्रहयानासनद्वैधीभावसमाश्रयाख्या वा षड्युक्तीराश्रित्य न्यायमार्गेण विचारे क्रियमाणे सुग्रीवसख्येन अग्निसमक्षमायुधेन सह शपथपूर्वकेण सीताधिगमः स्यादित्येवमनुमानेन यानेन च (वा) इति मयोच्यते इति दनुवाक्यानुसारेण ऋश्यमूकं प्राप्य तत्र हनूमन्मुखेन सुग्रीवं प्राप्य — सुग्रीवेणोक्तां—

"श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः" ।

"यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ।

रोचते यदि वा सख्यं बाहुरेष प्रसारितः ॥

गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ।

एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ॥

स प्रहृष्टमना हस्तं पीडयामास पाणिना ।

हृद्यं सौहृदमालंब्य पर्यष्वजत पीडितम्" ॥

"ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ।

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ" ॥

इति (श्रीमद्रामायणे ४ । ५ सर्गे) तिर्यग्जंतुना मया सख्येच्छा यदि तुभ्यं रोचते इत्याद्युक्त्वा प्रसारितं पाणिं स्वपाणिना रामः संपीड्य तं परिष्वज्य च हनूमता कल्पितदीप्यमानाग्नेः प्रदक्षिणं कृत्वा श्रीरामः सुग्रीवश्चोभौ वयस्यत्वमुपागतौ स्वाभ्युपगतस्वनिगृहीतदनुवंश्यवाक्यानुरोधेन सुग्रीवस्य शरणागतत्वेपि सुग्रीवेण सह रामस्य सख्याश्रयणमित्यदोषात् ॥

(अनुवर्तते)

काशी-शेषवेङ्कटाचलशास्त्री.

## कुट्टाकारशिरोमणिः.

(अनुवृत्तः)

---

युक्ते षट्कं जातं (६)। ततश्शिष्टेषु पञ्चसु पदेषूपान्त्येन षट्केन गुणिते रूपात्मके तदुपरि फलेऽन्त्येन मतिसंज्ञकेन त्रिकेण च युक्ते नवकं (९) जातं। ततश्शिष्टेषु चतुर्षूपान्त्येन नवकेन गुणिते रूपात्मके तदुपरिफलेऽन्त्येन षट्केन च युक्ते पञ्चदशकं (१५) जातं। ततश्शिष्टेषु त्रिकेषूपान्त्येन पञ्चदशकेन गुणिते रूपात्मके तदुपरिफलेऽन्त्येन नवकेन युक्ते चतुर्विंशति(२४)र्जाता। एवं वल्ल्युपसंहारः कृतः॥

अथात्र पदत्रयाभावादध उपरि गुणितमन्त्ययुगित्येतन्न प्रवर्तत इति। अत्राधोराशिरप्रकृतः। अथ चतुर्विंशति (२४) संख्याकोपरिराशावूनाग्रच्छेदेनाष्टादशकेन (१८) भक्ते षट्कं (६) शिष्यते। अस्मिन्नधिकाग्रच्छेदेनैकोनत्रिंशता (२९) गुणितेऽधिकाग्रेण सप्तकेन (७) च युक्ते एकाशीत्युत्तरं शतम् (१८१); अयं द्विच्छेदाग्रः प्रथमो भाज्यराशिः; अयमष्टादशभि (१८) र्विभक्तः एकाग्रः; एकोनत्रिंशता (२९) सप्ताग्रः (७); अथान्येऽपि भाज्यराशय उदाह्रियन्ते। अत्रोनाग्रभक्तशेषं षट्कम् (६) अस्मिन्नेकगुणितोनाग्रभागहारेणाष्टादशकेन (१८) युक्ते चतुर्विंशति (२४) र्जाता। अस्यामधिकाग्रच्छेदेनैकोनत्रिंशता (२९) गुणितायामधिकाग्रेण सप्तकेन (७) च युक्तायां त्र्यधिकं शतसप्तकं (७०३) जातम्। अयं चात्रान्यो भाज्यराशिः। अथोनाग्रच्छेदभक्तशेषेण (६) द्विगुणेनोनाग्रच्छेदेन (३६) युक्तेन (४२) आधिकाग्रच्छेदं (२९) गुणयित्वा, तत्राधिकाग्रं सप्तकं (७) युक्तं पञ्चविंश-

त्युत्तरशतद्वयाधिकसहस्रं (१२२५) जातम् । अयं चापरो भाज्यराशिः। एतौ चानन्तरौ भाज्यराशी अष्टादशभि (१८) रेकाग्रौ । एकोनत्रिंशता (२९) सप्ताग्रौ । एवंप्रकारेण भाज्यराशिसहस्रमानेतव्यम् ॥

अथ प्रश्नविशेष उदाह्रियते । उद्देशकः—

" आकृत्यै (२२) कादशाग्रा ये सप्ताग्रामनुभि (१४) र्हृताः ।
आसन्ना राशयोऽष्टौ तानाचक्ष्व मतिमद्वर ॥ २

अत्र पूर्वोक्तप्रक्रियया रूपात्मिकायाः प्रथमाया मतेराश्रयणेनानीताः प्रथमतृतीयपञ्चमा विषमा भाज्यराशयः क्रमेण लिख्यन्ते । तत्र प्रथमः सप्तसप्तति (७७) संख्यः । तृतीयः पञ्चाशीत्युत्तरशतत्रय (३८५) संख्यः । पञ्चमः सप्तोनशतसप्तक (६९३) संख्यः । सप्तमः सैकसहस्र (१००१) संख्यः । अत्र द्वितीयादि सम-भाज्यराशयः प्रथममत्यवलम्बनेन सेत्स्यन्तीति तदनन्तरां चतुष्टयात्मिकां मतिमवलम्ब्य पूर्वोक्तप्रक्रियानीते द्वितीये भाज्यराशिरेकात्रिंशदुत्तरशतद्वय (२३१) संख्यः । चतुर्थः एकोनचत्वारिंशदधिकपञ्चशत (५३९) संख्यः । षष्ठःसप्तचत्वारिंशदुत्तरशताष्ट (८४७) संख्यः । अष्टमः पञ्चपञ्चाशदुत्तरैकादशशत (११५५) संख्यः । एवमेतेऽष्टापि राशयो द्वाविंशत्या (२२) विभक्ताः एकादश (११) शेषा भवन्ति । चतुर्दशभिः सप्त शेषाः । एवमेवंविध-प्रश्नविषये भाज्यराशय आनेतव्याः ॥

अथ यत्रोनाग्रभागहारेणाऽधिकाग्रभागहारः शुद्ध्यति तत्रोदाह्रियते । उद्देशकः—

यस्त्र्यग्रस्सप्तभिर्भक्तः
सप्तत्या दशकाग्रकः ।
जानासि यदि तं राशिं
ब्रूहि सांवत्सराग्रणीः ॥

अत्रोनाग्रभागहारेण सप्तकेनाधिकाग्रभागहारस्सप्ततिसङ्ख्यः शुद्ध्यति। तस्मादत्र सप्ततिसंख्याकेऽधिकाग्रभागहारे दशकेन युक्तेऽशीति (८०) जाता। अयमत्र प्रथमो भाज्यराशिः। अयं सप्तभिर्भक्तस्त्र्यग्रो भवति। सप्तत्या दशकाग्रः। अथ द्विगुणेऽधिकाग्रभागहारे (१४०) अधिकाग्रेण (१०) युक्ते पञ्चाशदुत्तरशतं (१५०) जातम्। अयमत्र द्वितीयो भाज्यराशिः। एवं भाज्यराशिसहस्रमानेतव्यम्॥

अथ शेषपरस्परभक्तमित्यत्र फलपङ्क्तिरेका भवति। तदा शेषयोरप्येकश्शुद्ध्यति। तत्रोदाह्रियते। उद्देशकः—

यो दिग्भि (१०) र्विहृतस्त्र्यग्रो
रूपाग्रस्त्रिभिरुद्धृतः।
तं राशिं शीघ्रमाचक्ष्व
वेत्सि चेद्गणकोत्तम॥ ४

अत्रोनाग्रभागहारेण त्रिकेणाधिकाग्रभागहारे दशके हृते उपरिराशिरेकसंख्यः। अधोराशिस्त्रिसंख्यः। अत्रोपरिराशिनाऽधोराशिः शुद्ध्यति। फलपङ्क्तिरप्येका भवति। अतोऽत्रादावेव मतिः कल्प्यते। अयं रूपात्मकः उपरिराशिः केन गुणितोऽग्रान्तरेण द्विकेन च युक्तः स्वाधोराशिना त्रिकेण शुद्ध्यतीति लब्धा प्रत्यासन्ना मतीरूपात्मिका अनया गुणितेऽधिकाग्रभागहारे दशक (१०) संख्येऽधिकाग्रेण (३) च युक्ते त्रयोदशकं (१३) जातम्। अयमत्र प्रथमो भाज्यराशिः। अयं दशभिस्त्र्यग्रः; त्रिभिरेकाग्रः। अथाऽत्र रूपात्मिकायां मतावेकगुणोनाग्रभागहारे त्रिके दत्ते चतुष्कं (४) जातम्। अस्मिन्नधिकाग्रभागहारेण दशकेन गुणितेऽधिकाग्रेण त्रिकेण च युक्ते त्रिचत्वारिंश(४३)ज्जातम्। अयमत्र द्वितीयो भाज्यराशिः। एष च दशभिस्त्र्यग्रः; त्रिभिरेकाग्रः। एवं भाज्यसहस्रमानेयम्॥

अथात्र प्रश्नविशेष उदाह्रियते । उद्देशकः—

ये राशयोऽष्टभक्ताश्चे-
चतुरग्रा भवन्त्यपि ।
अष्टाग्रा द्वादशाप्ताश्चे-
त्तेष्वाद्यांश्चतुरो वद ॥

अत्रादावेव कल्पितायां रूपात्मिकायां मत्यामधिकाग्रभागहारेण द्वादशकेन गुणितायामधिकाग्रेणाऽष्टकेन युतायां विंशति (२०) जाता । अयं प्रथमो भाज्यः । अथ द्वितीयया रूपत्रयात्मिकया मत्या पूर्ववदानीतो द्वितीयो भाज्यश्चतुश्चत्वारिंशत्(४४)संख्यः । अथ तृतीयया रूपपञ्चकरूपया मत्या पूर्ववदानीतः तृतीयो भाज्यराशिरष्टषष्टि (६८) संख्यः । अथ चतुर्थ्या रूपसप्तकरूपया मत्या पूर्ववदानीतश्चतुर्थो भाज्यराशिर्द्विनवति (९२) संख्यः । एवमेते चत्वारो भाज्यराशयोऽष्टाभिश्चतुरग्राः द्वादशभिरष्टाग्राः ॥

अथ यत्र "शेषपरस्परभक्तामि" त्यत्र फलपङ्क्ती द्वे भवतः तदा शेषयोरप्येकः शुद्ध्यति, तत्रोदाह्रियते । उद्देशकः—

अष्टाभिश्चतुरग्रो यो
द्व्यग्रोऽष्टादशभिर्हृतः ।
क्षिप्रमाख्याहि तं राशिं
साग्रे यद्यस्ति संस्तवः ॥

अत्रोनाग्रच्छेदेनाष्टादशकेनाधिकाग्रच्छेदोऽष्टसंख्यः छेत्तुं न शक्यते । तस्मादत्र यथास्थितयोरेवानयोः परस्परभजनं कार्यमित्युपरिराशिनाष्टकेनाऽधोराशावष्टादशके विहृते द्वयं शिष्यते । तेनाष्टसंख्यः स्वोपरिराशिश्शुद्ध्यति ; फलपङ्क्ती च द्वे भवतः तदत्रादावेव प्रत्यासन्नां मतिं

कल्पयित्वा पूर्ववदानीतः प्रथमो भाज्यराशिः विंशतिसंख्यः । अयमष्ट-भिश्चतुरग्रः; अष्टादशभिर्द्व्यग्र । एवमेवंविधा भाज्याः स्थाप्याः ॥

अथ द्विविधबहुभागहारवद्भाज्यराशिप्रश्नविषय उदाह्रियते । उद्देशकः—

प्रकृते (२१) स्तिसृभिर्भक्तो
यो राशिस्स्याद्विशेषकः ।
चतुर्दशाग्रस्संकृत्या (२४)–
स्तिसृभिस्तं वदाशु मे ॥ ७

एषां द्विविधानां षण्णां सकाशादपवर्त्य हरौ द्वौ द्वौ । तद्वधमप-वर्तकेन संगुणयेदित्युक्तप्रक्रियया पूर्वमूनाग्रच्छेदोऽधिकाग्रच्छेदस्या-नीयते । तद्यथा — एकविंशतेर्द्वाविंशतेश्चापवर्तकाभावादनयोराहतिः पक्ष-रसार्णव : (४६२) संख्या । अथास्यास्त्रयोविंशतेरप्यपवर्तकाभावादन-योस्संवर्गः षडक्षितर्कदिक् (१०६२६) तंख्यः । अत्रायमूनाग्रच्छेदः । अथ चतुर्विंशतेः पञ्चविंशतेश्चापवर्तकाभावादनयोराहतिः पूर्णखतर्क (६००) संख्या । अथास्याप्षड्विंशतेश्चापवर्तको द्विसंख्यः; अनेना-पवर्तितयोरेतयोर्वधः खाभ्राङ्कराम (३९००) संख्यः । अयमपवर्तकेन द्विकेन गुणितः पूर्णाभ्रवसुमुनि (७८००) संख्यः । अत्रायमधिका-ग्रच्छेदः । अथैवमागताभ्यामाभ्यामूनाग्रच्छेदाधिकाग्रच्छेदाभ्यां द्वाद-शसंख्याकेनाग्रान्तरेण च पूर्वव "दधिकाग्रभागहारमि" त्येवमादिनानीतः प्रथमो भाज्यराशिः मनुवेदमुनिकृतरामरवि (१२३४७४१४) संख्यः । अयमेकाविंशत्या द्वाविंशत्या त्रयोविंशत्या च विभक्तो द्व्यग्रः; चतु-र्विंशत्या पञ्चविंशत्या षड्विंशत्या च चतुर्दशाग्रः । अत्राप्येवंविधा भाज्यराशयः पूर्ववदानेयाः ॥

अथ प्रश्नान्तरमुदाह्रियते । उद्देशकः—

नवत्या सैकयैकाग्रो
यो विंशत्या निरग्रकः ।
द्रुतमाचक्ष्व दैवज्ञ
तं राशिं मम पृच्छतः ॥ ८

अत्रैकनवतिसंख्येनाधिकाग्रच्छेदेन विंशतिसंख्येनोनाग्रच्छेदेन रूपात्मकेनाग्रान्तरेण च प्राग्वदानीतः आद्यो भाज्यराशिः नखाष्ट (८२०) संख्यः । अयमेकनवत्या रूपाग्रः; विंशत्या शून्याग्रः । अतोऽन्येऽप्येवंविधा भाज्यराशयः पूर्ववदानेयाः ॥

अथ भिन्नबहुभागहारभिन्नबह्वग्रसाग्रकुट्टाकारविषयमार्याद्वयमाह ।

**भिन्नबहुभागहारे कुट्टाकारे विभिन्नबह्वग्रे ।**
**हरयोर्द्वयोर्द्वयोर्यो भाज्यस्सोऽग्रं भवेद्धरस्तस्य ॥६॥**
**हरयोस्संवर्गस्स्यादेवं कार्यं पुनःपुनस्तावत् ।**
**यावद्विभाजकौ द्वौ भवतो भाज्योऽत्रपूर्ववत्साध्यः ॥७॥**

अस्यार्थः उदाहरणेन व्यक्तीभविष्यति । उद्देशकः—

सप्तादिभिस्त्रिभिर्भक्ते
यस्मिन् रूपशराब्धयः ।
शेषाः क्रमाद्भवेयुस्तं
राशिमाचक्ष्व तान्त्रिक ॥ ९

अत्र क्रमादिमे हाराः ७,८,९ । अग्राणीमानि १,५,४ । एष्वाद्याभ्यां हराभ्यामग्रान्तरेण चोक्तवदानीतो भाज्यराशिरेकोनत्रिंशत्संख्यः । अयं सप्तभिर्भक्तो रूपाग्रः; अष्टभिः पञ्चाग्रः; अथायमेव भाज्यस्तृतीयेन सह कर्मणि कर्तव्ये,

"हरयोर्द्वयोर्द्वयोर्योभाज्यस्सोऽग्रं भवेदि" त्यग्रं भवति ।

अस्याग्रस्य छेदयोर्वधः "तस्य हरयोस्संवर्गो हर" स्स्यादिति छेदो भवति । स चात्र षट्पञ्चाशत्संख्यः । अस्याग्रमेकोनत्रिंशत्संख्यो भाज्यराशिः । तृतीयच्छेदो नन्द (९) संख्यः अस्याग्रं वेद (४) संख्यम् । अग्रान्तरं पञ्चविंशतिसंख्यम् । आद्याभ्यां छेदाभ्यामनेनाग्रान्तरेण चोक्तवदानीतस्त्रिच्छेदाग्रो भाज्यराशिः पञ्चाशीति (८५) संख्यः । अयं सप्तभिर्भक्तः एकाग्रः । अष्टभिः पञ्चाग्रः । नवभिश्चतुरग्र । एवमेवंविधप्रश्नविषये भाज्यराशय आनेतव्याः ॥

अथात्रैव प्रश्नविशेष उदाह्रियते । उद्देशकः—

को राशिः कैर्हरैर्भिन्नै-
भक्तो भिन्नावशेषकः ।
स एवाग्रैक्ययुक्तश्चेत्
तैर्हरैरेव शुद्ध्यति ॥ १०

अत्रादौ स्वेच्छयाऽग्राणि कल्पयित्वा तद्वशाद्वक्ष्यमाणप्रकारेण तेषां तेषां छेदानुत्पाद्यानन्तरप्रदर्शितभिन्नबहुभागहारभिन्नबह्वग्र भाज्यराश्यानयनप्रकारेण भाज्यराशिमानयेत् । अत्रेष्टाग्रवशात् तच्छेदानयनार्थमिदमभियुक्तप्रणीतं सूत्रम्—

"अग्राणीष्टानिस्युस्तद्योगोऽग्रान्वितः पृथक्छदाः ।
अग्रैक्ययुते भाज्ये वियुते त्वग्रैक्यमग्रोनम् ॥

अस्यार्थः । अग्राणि शेषाणि इष्टानि स्युः; अभिप्रेतानि कल्प्यानि भवेयुः; तद्योगः अग्रयोगः; पृथगग्रान्वितः; पृथक्पृथक्तदग्रयुतस्सन् छेदाः तत्तदग्रवन्तश्छेदाः स्युः । अग्रैक्ययुते भाज्ये भाज्यराशौ तत्तच्छेदानां निरग्रदानार्थमग्रयोगेन युक्ते सत्येतद्वेदितव्यम् । वियुते

तु भाज्यराशौ तत्तच्छेदानां निरग्रदानार्थमग्रयोगेन हीने सति पुनः । 'अग्रैक्यमग्रोनम्' अग्रयोगः पृथक्पृथक्तत्तदग्रवियुतस्सन् तत्तदग्रवन्तश्छेदास्स्युः । उदाहरणम् ॥

अत्र कल्पितान्यग्राणीमानि त्रीणि चत्वारि पञ्च; एषां योगो रवि (१२) संख्यः; एष त्रेधा निहितः १२ १२ १२ । एषु पूर्ववत् कल्पितेष्वग्रेषु क्षिप्तेषु जाताश्छेदाः पञ्चदश षोडश सप्तदश । एषां क्रमेणाग्राणि पूर्वलिखितान्येवः ३, ४, ५ । एभिश्छेदैरेतैरग्रैश्चानन्तरप्रदर्शितभिन्नबहुभागहारभिन्नबह्वग्रभाज्यराश्यानयनप्रकारेणानीतो भाज्यराशिः वसुरसपूर्णाब्धि (४०६८) संख्यः । एष पञ्चदशभिर्भक्तस्त्र्यग्रः षोडशभिश्चतुरग्रः; सप्तदशभिः पञ्चाग्रः । अथायमेव भाज्यराशिरग्रैक्येन द्वादशकेन युक्तश्चेदेभिश्छेदैर्निरग्रश्च भवति । एवमेवंविधाः भाज्यराशयस्साध्याः ॥

अथाग्रैक्यहीनभाज्यानयन उदाह्रियते । उद्देशकः—

> को राशिः कैर्हरैर्भिन्नैः
> भक्तो भिन्नावशेषकः ।
> स एवाग्रैक्यहीनश्चेत्
> तैर्हरैरेव शुद्ध्यति ॥ ११

अत्र पूर्ववत् प्रथमं स्वेच्छयाग्राणि परिकल्प्य तद्वशात् 'वियुतेत्वग्रैक्यमग्रोन' मित्युक्तप्रकारेण तेषां छेदानुत्पाद्य भिन्नबहुहारभिन्नबह्वग्रभाज्यानयनप्रकारेण भाज्यमानयेत् । अत्र पूर्ववत्कल्पितान्यग्राणीमानि; पञ्च सप्त नव । एषां योगश्चन्द्रकर (२१) संख्यः । अयं

(अनुवर्तते)

क. शेषाचार्यः.

## कुन्दमालाविमर्शः

(अनुवृत्तः)

---

एवं च अनुकार्याश्रयोऽपि लौकिको रसः (रत्यादिः) सामाजिकेषु पूर्वं वासनात्मकस्थायी, लोकोत्तरवर्णनाविषयसत्काव्यप्रतिपादितालौकिकविभावादिमहिम्ना क्रमेण अङ्कुरितकन्दलितपल्लवितत्वादिरूपेण परिपोष्यमाणः,

'द्राक्षामधूकखर्जूरकाश्मीर्यैस्सह रूपकैः ।
तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ॥'

इत्युक्तलक्षणनानारसकदम्बस्वरूपपानकरसन्यायेन चर्व्यमाणस्सामाजिकाश्रयः अलौकिको रसस्तन्तुपटन्यायेन अभिव्यज्यत इत्यालङ्कारिकाणां मतम् । तन्तुपटन्यायश्च भावप्रकाशादिग्रन्थेषु—

'यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः ।
पटात्मना परिणताः पटवाच्या भवन्ति ते ॥
तथैव स्थायिनो भावाः विभावादिभिरन्विताः ।
रसात्मना परिणताः रसवाच्या भवन्ति ते ॥'

इत्यादिना प्रदर्शितः । यद्यपि—

'सामाजिकादिरेवास्य रसस्याश्रय उच्यते ।
रसस्य वर्तममानत्वान्नानुकार्यस्य सम्भवः ॥
अनुकार्यस्य रामादेः कालातिक्रमदर्शनात् ।
नातिक्रान्तानुकार्यस्य रसोद्भावनया कविः ॥
बध्नाति काव्यं यत्तस्थाद्रसस्सामाजिकाश्रयः ।'

इति शारदातनयप्रतिपादितदिशा रसस्सामाजिकाश्रय एव तथापि परमार्थतः परिपूर्णाखण्डैकरसानन्दरूपब्रह्मापरपर्यायस्य देशकालाद्यनवच्छिन्नस्य रसस्याधिकरणचिन्ता सूक्ष्ममतिनिरीक्षणपटीयसी न बोभवीतीति सारतरविचारचतुरैः रसिकैः कविभिः महामहिमयोगिगम्यत्वमात्रेण ईश्वरस्य दिक्कालाद्यनवच्छिन्नस्य योगिमनोनिवाससंवादवत् सामाजिकाधिकरणकत्वारोपोऽपि सह्यत इति ब्रह्मानन्दसब्रह्मचार्ययमलौकिको रसः ॥

निर्विकल्पकत्वसविकल्पकत्ववैलक्षण्यं चाचक्षाणानां त्वालङ्कारिकाणां परोद्भावितदूषणं भूषणमेव। इयांस्तु विशेषः। ब्रह्मानन्दो योगगम्यः; अयं तु विभावानुभावाद्यनुसन्धानगम्यः। यथा वा नानाविधविमलकर्मनिर्मलान्तःकरणेषु शमदमादिसाधनसम्पन्नेषु श्रवणमनननिदिध्यासनपरेषु परमयोगिषु निर्विकल्पकसमाध्यभिव्यक्त्या ब्रह्मेति परमात्मेति ईश्वर इति परिभाष्यते तथा 'एतस्यैवानन्दस्य मात्रां भूतान्युपजीवन्ती'ति श्रुतिपर्यालोचनया सर्वत्र एकैवानन्दव्यक्तिः तत्तद्विषयसान्निध्याल्लौकिकं सुखमिति शब्द्यते। तदेव सुखं निरन्तरकाव्यानुशीलनविशदीभूतमनोमुकुरेषु सामाजिकेषु अलौकिकविभावाद्यभिव्यंजितं कविसमयानुसारादलौकिको रस इति सम्पिण्डितोऽयमर्थः। उक्तं च स्वात्मयोगप्रदीपे—

'या स्थायिभावरतिरेव निमित्तभेदा-
च्छृङ्गारमुख्यनवनाट्यरसी भवन्ती।
सामाजिकान् सहृदयान् नटनायकादी-
नानन्दयेत्सहजपूर्णरसोऽस्मि सोऽहम् ॥' इति।

एतादृशपण्डितप्रकाण्डप्रक्रियामनुसन्दधानो महाकविर्भवभूतिरपि 'एको रसः करुण एव निमित्तभेदा'दित्यादिना वेदान्तिनां विवर्तवादं

स्वकाव्ये सूक्ष्मसरण्या समुद्गीर्णयामास । अत्र च श्लोके प्रकृत-करुणविप्रलम्भस्वरूपप्रसञ्जनप्रसाञ्जितरससामान्यस्वरूपं प्राचीनप्रेक्षावत्प्रणालिकया सङ्गृह्य प्रकाशितमिदं व्याख्यासारस्येनान्तेवासिनां स्वान्ते समुल्लसत्विति मनीषया समुन्मेषितम् ॥

एतादृशरसाविर्भावः सपरिकरः कुन्दमालायां विरल एव । तथापि कुन्दमालायाः षष्ठेऽङ्के संविधानपरिपाटी लोकोत्तरचमत्कृतिमादधती समाकर्षति सहृदयस्वान्तानि । करुणविप्रलम्भरसस्तु उत्तररामचरितवदत्रापि प्राधान्येन जागर्ति । न केवलमनयोरेव ग्रन्थयोः स रसः । अपि तु सकलसहृदयनयनचकोरचन्द्रिकायमाने, श्रीयदुगिरियतिराजसम्पत्कुमाररामानुजमुनीनामाज्ञया प्रकाशिते भारतभूमिं परित्यज्य जर्मन्राष्ट्रप्रधानबर्लिन्नगरे चिराय निलीने, तैरेव स्वामिवरेण्यैः महता श्रमेण सम्पाद्य सम्प्रति सम्मुद्रिते ध्वन्यालोकशृङ्गारप्रकाशादिग्रन्थोदाहृतपद्यके तापसवत्सराजनाटकेऽप्ययं करुणविप्रलम्भरसः सपरिकरस्सारस्येन सहृदयहृदयाह्लादकत्वेन सम्मत इति हेतुः परममोदः । अत एव प्रतापरुद्रीयकाव्यप्रकाशादिष्वयमनुल्लिखितोऽपि परमप्राचीनतापसवत्सराजनाटके "यूनोरन्यतरस्मिन्" इत्यादिलक्षणानुसारेण प्रकाशितः परमास्वाद्यतां नीयमनो वर्तत इत्यलं प्रसक्तानुप्रसक्तपरिचिन्तया ॥

कुन्दमालास्थानि पद्यानि कानिचिद्राजाधिराजभोजराजेन स्वकृते शृङ्गारप्रकाशे उदाहृतानीति सम्प्रत्युपलब्धशृङ्गारप्रकाशकोशतो विज्ञायते । तत्र शृङ्गारप्रकाशकभूमिकायां अदृष्टश्रुतिचराणां ग्रन्थानां अनङ्गवती, अब्धिमन्थनं, इन्दुलेखा, इन्दुमती, कृत्यारावणं, चारुमती, चित्रलेखा, त्रैलोक्यसुन्दरी, भीमकुल्या, फुल्लसकं, मत्स्यहसितं, विनयवतीशूद्रकं, विक्रान्तशूद्रकं, मुकुटताडितकं, माधविका,

मालतिका. लीलावती, शकुन्तिकाप्रभृतीनां मध्ये इयं कुन्दमालापि निरदिश्यत । ततो ज्ञायते भोजराजमहाकवेः पूर्वं इयं कुन्दमाला रचिता स्यादिति । अथापि वामनाचार्यानन्दवर्धनाचार्यप्रभृतिभिरद-सीयानि पद्यानि किमिति स्वस्वग्रन्थेषु नोदाहारिषतेति विचिकित्सा पुरत उदेति । तथापीममंशमुपरिष्टाद्यथामति प्रदर्शयिष्यामः । उत्त-ररामचरिते खण्डमरिचामिक्षाकर्पूरैलादीनां सम्मेलनादपूर्वः कश्चिदा-स्वादः माधुर्यादिविलक्षणः अनुभूयते । तथा प्रपानकरसन्यायाच्च-र्व्यमाणः रसः स्वारसिकः अनेकलक्ष्येषूपलभ्यमानो दरीदृश्यते । तथा कुन्दमालायां भूयसा न लक्ष्यन्त इत्युक्तम् । सम्प्रति—

'नाळिकेरजलक्षीरसिताकदलमिश्रणे ।
विलक्षणो यथास्वादः भावानां संहतौ तथा ॥'

इति प्रदर्शितपथा 'तटस्थं नैराश्यादपि च कलुषं विप्रियवशाद्वियोगे' इति प्राग्लिखितपद्ये भावानां संहतिः भवभूतिकृतग्रन्थेषु भूयोभूय आस्वाद्यमाना वर्तत इति महाकवेर्वैदग्ध्यं लोकातिशायि । यथा मालतीमाधवे पञ्चमाङ्के लोकोत्तरशृङ्गाराद्भुतबीभत्सरसप्रचुरे—

राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीं ।
आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया—
त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तते ॥'

इत्यत्र प्राधान्यतः प्रबन्धप्रवृत्तमाधवनिष्ठमालतीविषयिणी रतिः, प्रेय-सीमिति निर्दिष्टेन आलम्बनविभावेन विभाव्यमाना, मालत्यवलोकन-रहस्थित्यादिभिरुद्दीपिता, मनोविकासप्रियवचनमालतीरक्षणादिभिः वाङ्म-नःशरीरारम्भरूपैरनुभावैरनुभाव्यमाना, तद्दर्शनजन्यमदश्रमहर्षचिन्तास्मृ-त्यादिभिर्व्यभिचारिभिः परिपोष्यमाणा, आस्वाद्यतामापन्ना प्राधान्येन

ध्वन्यते हि । तदुपस्मारकत्वेन—'यदि मम क्षणमात्रमितःपरं विलम्बोऽभविष्यत् तदा महाननर्थ आपत्स्यत' इत्येवंरूपस्य भयानकस्थायिभूतस्य भयस्य. 'क्षणव्यवधानेऽपि परासुरेवेयं मृतेव पुनरुत्पन्ने'ति प्रेयसीविलक्षणावस्थासमवलोकनजन्यस्य शोकस्य करुणरसस्थायिभूतस्य, 'अहो! दैवविलसितस्य अचिन्त्यमहिमता यदद्यैव महामांसविक्रयार्थं ममागमनं तत्रैव काकताळीयन्यायेन प्रियायाः सम्प्राप्तिः महदिदं चित्र'मिति अद्भुतरसस्थायिनः विस्मयस्य, 'कथमयं महापापः निरपराधिनीं त्रिभुवनरत्नरूपां हन्तुमिदानीं समुद्यतः । अतोऽवश्यमसौ सम्प्रहर्तव्य' इति 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रकर्षः क्रोध इष्यते' इत्युक्तलक्षणस्य क्रोधस्य रौद्ररसस्थायिभावस्य, तथा 'मत्प्राणेभ्योऽपि गरीयसीं प्रेयसीं प्रतिपाल्य जन्मसाफल्यमनुभवामी'ति बहुप्रकारमनोरथपरम्पराप्रफुल्लितरतेश्च गम्यमानत्वात् एषां निरूपितानां रसान्तरविषये व्यभिचारिभूतानां भयविस्मयक्रोधादीनां भावानां मिश्रणं एकचमत्कृतिजनकज्ञानगोचरतामापन्नं सत् भावशबलतामवगाहते । न चात्र पूर्वपूर्वभावोपमर्दनपूर्वकं उत्तरोत्तरभावानामभिव्यक्तेरभावात्—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत से'

इत्यादि लक्ष्ये च तथा दृष्टत्वाच्च भावशबलता अभ्युपगन्तुमशक्येत्याशङ्का प्रथमं प्रवर्तते, इति वाच्यम् । तथापि काव्यप्रकाशोदाहृते पञ्चमोल्लासस्थे—

'पश्येत्कश्चिच्चल चपल रे का तवाऽहं कुमारी'

इत्यत्र, जगन्नाथपण्डिततल्लजोदाहृते—

'पापं हन्त मया हतेन विहितं सीताऽपि यद्यापिता
सा मामिन्दुमुखी'—

इत्यादौ उदासीनेन विद्यमानानां भावानामेव शबलता—दृष्टा न तु

उपमर्द्योपमर्दकभावनेत्यत्रापि भावशबलताङ्गीकारे न कापि क्षतिः। यदि उपमर्द्योपमर्दकभाव आवश्यकः टीकाकारैः बहुभिस्तथा आदृत इत्यागृह्यते। तदात्रापि मुदा विकसितमिति गम्यमानया प्रेयसी-रत्या पूर्वतनानां भावानां उपमर्द्यता वक्तुं सुशकेति सन्तोष्टव्यम्। यद्वा प्रधानीभूतशृङ्गाररसोपस्कारकत्वेन, विकलपदसूचितमनोवैक्लव्य-नियतकम्पशङ्काग्लानिनिर्वेदजाड्यचिन्तावेगदैन्यालस्यमोहादिभिः प्रतीय-मानैरुपचितः भयानकरसः, तथा द्रुतं करुणयेतिनिर्दिष्टचित्तद्रवीभा-वोचितशरीरवागारम्भानुभावनियतवैवर्ण्यजाड्यमहोन्मादविषादाश्रुवैस्वर्या-दिभिः प्रतीयमानैः परिपुष्टतां नीयमानः करुणरसश्च, तथा दैवा-त्समासाद्य मे इति सूचितयादृच्छिकसमागमालम्बनबीजविधिवैचित्र्य-परिशीलनेनोद्दीपितः मनोविक्षोभोचितशरीरवागारम्भभावनियतप्रलयस्वे-दहर्षगर्वस्मृतिवितर्कचिन्तादिभिरनुभावैः व्यभिचारिभिश्च प्रतीयमानैरु-पचितः अद्भुतरसः, तथा प्रियावधोद्यतखड्गपाण्यालम्बनकः तदीय-दौरात्म्यमालतीत्रासादिभिरुद्दीपितः ज्वलितमिति मनोज्वलननियतस्त-म्भरोमाञ्चस्वेदशत्रुभर्त्सनादिभिरनुभावितः आवेगचापलासूयामदश्रमाम-र्षादिभिर्व्यभिचारिभिः परिपोष्यमाणः क्रोधरसश्च अङ्गिभावापत्त्या दूरतो निरस्तपरस्परविरोधाः प्रधानरसं शृङ्गारमाञ्जस्येन समुद्दीपयन्तीति पञ्च-रसानां समावेशनप्रकारः परां कोटिमाटीकत इति भवभूतिमहाक-वेर्वैदग्ध्यं नास्मादृशेन विवरीतुं साम्प्रतम्; किं तु लोकोत्तरप्रति-भाशालिना विद्वन्मणिनैव। ईदृशभावसंहतिः कुन्दमालायां विरला। तथापि चतुर्थेऽङ्के पात्रसन्निवेशचारुता, उक्तिप्रत्युक्तिरम्यता, तत्तदु-चितवर्णनावैदग्धी च सहृदयानां हृदयानि रञ्जयति। यथा कण्व-रामयोः परस्परालापे—

"कण्वः—(उपसृत्य) भो राजन्!

रामः—हन्त ! वयस्य तापसविरुद्धमामन्त्रणम् । अथवा वयसः परिणामेन इदमपराद्धं न भगवता ।

अहं रामस्तवाभूव त्वं मे कण्वश्च शैशवे ।
यूयमार्या वयं चाद्य राजानो वयसा कृताः ॥"

इयं च परिपाटी—

'पुरा भूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः ।'

इत्यमरुकवेर्भङ्गीमङ्गीकरोति । तथा—

"कण्वः—

सुरभिकुसुमगन्धैर्वासिताशामुखानां
फलभरनमितानां पादपानां सहस्रैः ।
विरचितपरिवेशश्यामलोपान्तरेखः
रमयति हृदयं ते हन्त कच्चिद्वनान्तः ॥

रामः—बहुमाननिरन्तरीकृतमानसं मां तपोवनमिदं रमयति न रमयतीति वचनावकाश एव नास्ति । पश्य—

दावाग्निं क्रतुहोमपावकधिया यूपस्थया पादपान्
अव्यक्तं मुनिगीतसामगतया भक्त्या शकुन्तंस्वनम् ।
वन्यांस्तापसगौरवेण हरिणान् सम्भावयन्नैमिशे
सोऽहं यन्त्रणया कथंकथमपि न्यस्यामि पादौ भुवि ॥"

अत्र प्रकृतवनसम्बन्धि दावाग्नि, विटपि, शकुन्तध्वनि, हरिणेषु यथाक्रमं रामस्य आहवनीय, यूप, सामगान, तापसत्वसम्भावनया आहार्ययानुभूयमानश्चमत्कारसारः रसिकेन कथङ्कारं निरोद्धुमीष्टाम् । ततः.

**कण्वः**—युक्तरूपोऽयं धर्मैकपरायणस्य महाराजस्य सकलजगदभ्युदयनिश्श्रेयसहेतोः निष्प्रत्यूहतपस्सिद्धिक्षेत्रे पूर्वराजर्षिवंशाध्यासिते नैमिशे बहुमानः ।

आनाकमेकधनुषा भुवनं विजित्य
पुण्यैर्दिवः क्रतुशतैः विरचय्य मार्गम् ।
इक्ष्वाकवः सुतनिवेशितराज्यभाराः
निश्श्रेयसाय वनमेतदुपाश्रयन्ते ॥

**रामः**—(प्रणमति)

**कण्वः**—इदमपरं न पश्यसि ।

अस्मिन् कपोलमदपानसमाकुलानाम्
विघ्नं न जातु जनयन्ति मधुव्रतानाम् ।
सामध्वनिश्रवणदत्त मनोवधान-
निष्पन्द मन्दमदवारणकर्णतालाः ॥

**रामः**—(विहस्य) किमत्राश्चर्यम् ।

मुनीनां सामगीतानि पुण्यानि मधुराणि च ।
प्रवासिनामपि मनो हरन्ति किमु दन्तिनाम् ॥

इत्यादिना परस्परसम्भाषणं युक्तरूपं वर्तते । यथा भवभूतिकवेः 'मन्द्रैषां लक्ष्मीर्निहिताधिवाचि' इत्यादि श्लोकेन बह्वृचशाखायामभिमानः तथास्य ग्रन्थकारस्य धीरनागस्य 'अव्यक्तं मुनिगीतसामगतया भक्त्या' 'मुनीनां सामगीतानि पुण्यानि' इत्यसकृदुक्त्या सामशाखायामादरस्सम्भाव्यते । उत्तररामचरिते द्वितीयेऽङ्के तपोवनवर्णनापेक्षया अत्र कुन्दमालायां चतुर्थाङ्कादिषु तपोवनवर्णनादिकं सुकुमारं स्वभावमधुरं किमपि कामनीयकमुद्गिरति । तथा तस्मिन्नेव तपोवन

## अभिप्रायमयूखः

सारस्वतलोके बहवो गवेषणपरायणाः गवेषणफलितान् प्रीतनवान् विषयान् तत्तत्काले संस्कृतेतरवाणीमयासु पत्रिकापरम्परासु प्रकटीकुर्वते। संस्कृतपाठकाः एतान् विषयान् विज्ञाय एतेषां गुणदोषौ विचार्य लोकमुपकर्तुं साम्प्रतम्। अस्यां पत्रिकायां विबुधवरेण्यानां अभिनवानभिप्रायान् संगृह्य संस्कृतविपश्चितां तन्निवेदनोपकारः कर्तव्य इति अस्मत्प्रेष्ठपाठकमहोदयैः कैश्चन संसूचितम्। तन्मनासि निधाय इतःपरमस्मत्पत्रिकायां इतरभाषामयपत्रिकाभ्यः संस्कृतवाङ्मयविषयकाः मुख्याः अभिनवाभिप्रायाः संगृह्योच्यन्ते जिज्ञासुप्रमोदनायेति शम्॥

### १. न्यायदर्शने क्षणिकवादः विज्ञानवादश्च

रायल् एष्याटिक् सोसैटि जर्नल् (Journal of the Royal Asiatic society) इत्यस्याः पत्रिकायाः जनवरिमासिक्यां संचिकायां सुगृहीतनामधेयाः ज्वलप्रसादपण्डिताः न्यायदर्शने उपलभ्यमानत्वेन प्रतीतं क्षणिकवादं विज्ञानवादं च अधिकृत्य अतिस्वरसं विलिखन्ति। अतीव हृद्या पण्डितानां विमर्शसरणिः॥

न्यायदर्शने तृतीयाध्यायद्वितीयाह्निके दशमं सूत्रमारभ्य अष्टादशसूत्रपर्यन्तं अक्षचरणैः बौद्धक्षणिकवादः निराकृत इति वात्स्यायनप्रभृतीनां सर्वेषां व्याख्यातॄणमभिप्रायः। बुद्धेरनित्यत्ववारणप्रसङ्गे अनपेक्षितः क्षणिकवादप्रसङ्गः हठात् कृत इत्येतदसंभावितं मन्वानाः के चन विद्वांसः एतानि नव सूत्राणि प्रक्षिप्तानि प्रचक्षते। अत्र

न क्षणिकवादनिरासः नापि सूत्राणां प्रक्षेपशङ्कावकाशः इति सूक्ष्म दिशा विलक्षणं समाधीयते पण्डितैः ॥

तद्यथा—

तृतीयाध्यायद्वितीयाह्निकाद्यसूत्रमारभ्य सप्तदशसूत्रपर्यन्तं एकमेवाधिकरणं बुद्धेरनित्यत्वविषयकं । बुद्धेर्नित्यता सांख्यानामभिमता । सात्र वार्यते । पुरा एतानि सप्तदश सूत्राणि एकाधिकरणकानीति अङ्गीकृतमासीदित्यत्र प्रमाणं अपेक्षितं चेदुच्यते । सप्तदशसूत्रव्याख्यान्ते प्रशस्तपादाः—

"इत्युपपन्नमनित्या बुद्धिरिति इति विलिलिखुः । वर्धमानस्यैतद्विदितमासीत्, तथापि सः भिन्नाधिकरणत्वमेवांग्यकरोत् । भिन्नाधिकरणपक्षे दोषाः—

१. III २, ९, तमे सूत्रे बुद्ध्यनित्यताप्रकरणपरिसमाप्तिश्चेत् सांख्यपूर्वपक्षसूत्रे अधिकरणसमाप्तिरसम्भाविता । अधिकरणसमाप्तिः स्वपक्षस्थापकसिद्धान्तसूत्रेण किल सम्पाद्या ।

२. बुद्धेरनित्यतां राद्धान्तयितुमुपक्रान्तः ऋषिः पूर्वपक्षिणं सांख्यं मध्ये विहाय बौद्धं समानीय सांख्यं प्रति तं स्थापयित्वा तदनन्तरं स्वयमेव तं प्रतियोद्धुमारेभे इति विचित्रतरा वादसरणिः ॥

३. III २, १०, तमसूत्रमारभ्य III २, १८, सूत्रपर्यन्तं सांख्यकार्यकारणभावखण्डनपरो ग्रन्थः ॥

क्षीरेण दध्युत्पत्तिरत्र विक्रियते दृष्टान्ततया । ज्ञानानामयौगपद्यं वस्तुनः अप्रत्यभिज्ञानं च विवरीतुं यदुक्तं सांख्येन तत् 'न गत्यभवात्' इति सूत्रेण प्रत्युक्तम् । सांख्येनोक्तं न सङ्गच्छते, बुद्धौ गत्यभावात् ॥

III २, ९, तमे सूत्रे सांख्यः पुनः ब्रूते—द्रव्यान्तरोपधानाद्यथा स्फटिकान्यत्वाभिमानः एवं विषयान्तरोपधानात् बुद्धिवृत्तिषु नानात्वाभिमानः सम्भवतीति ॥

अत्र 'न हेत्वाभावात्' इति सूत्रमाहोस्विद्भाष्यवाक्यमिति सन्देहे इदं सूत्रमेव, उत्तरसूत्रत्रयेण च साकं उत्तरपक्षं प्रसाधयति। बुद्धेः स्फटिकौपम्ये हेत्वभावः। स्फटिकच्छायाः अनेकाः उत्पद्यन्ते न केवलं भ्रमनिबन्धाः। स्फटिकेऽपीति सूत्रे अपिशब्दः पूर्वसूत्रान्तरविषयमेवाधिकरोतीति स्पष्टम् ॥

नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञेत्युत्तरसूत्रे नित्यानित्यव्यवस्था यथानुभवमङ्गीक्रियते। न तु सर्वं नित्यं सर्वमनित्यं वेति प्रतिज्ञातुं पार्यत इत्युच्यते। नोत्पत्तिविनाशकारणोपलब्धेरिति सूत्रे प्रसक्ते बुद्धिविषये नित्यता नाङ्गीक्रियते बुद्धीनां उत्पत्तिविनाशकारणस्य दृश्यमानत्वात्। अनन्तरं उत्पत्तिप्रकारः कथमिति जिज्ञास्यते तत्रापि सांख्यनैयायिकयोरेव वाक्यार्थः प्रचलति ॥

स्फटिकेऽपीत्येतत्सूत्रे क्षणिकत्वादित्युक्तं। अत्र सौगतपरिभाषितक्षणिकत्वं न विवक्षितम्। क्षणिकत्वं हि लङ्कावतारसूत्रे एवमुपसूत्रितम्——निर्व्यापारं क्षणिकं विविक्तं क्षयवर्जितम्। अनुत्पत्तिं च धर्मानां क्षणिकार्थं वदाम्यहम्। उत्पत्त्यनन्तरं भङ्गं न वैदिशामि बालिशाः। प्रसक्तन्यायसूत्रे तु व्यक्तीनाम परापरोत्पत्तिरेव कथिता। वस्तुतः नित्यत्वक्षणिकत्वचिन्ता अन्यत्र चतुर्थाध्याये ऋषिणा कृतेति तृतीयाध्याये क्षणिकतावादः अविवक्षित एवेति सर्वं चतुरस्रमिति ज्वलप्रसादपण्डिताः अभिप्रयन्ति ॥

चतुर्थाध्यायद्वितीयाह्निकषड्विंशे सूत्रे तदुत्तरेषु च सूत्रेषु विज्ञानवादः उत शून्यवादः निराकृत इति द्वौ पक्षौ। अत्र न विज्ञा-

नवादः नापि शून्यवादः निराक्रियते किं तु नैयायिकमतरीत्या अवयवातिरिक्तः अवयवी प्रमाणतः प्रतिपत्तुं पार्यते इति समर्थ्यते । अनेन परमाणुः निरवयवस्सिद्धयति ॥

एवं प्राक्तनव्याख्यातारः सूत्रेषु काशं कुशं वावलम्ब्य सूत्रघटकपदसामर्थ्यमपरिगणयन्तः एव सौगतमतं निर्मूलयितुं हठात् प्रचक्रमिरे, इत्युपसंहरन्ति पण्डिताः ॥

## २. कालिदासकृत कुन्तलेश्वरदौत्यम्.

विजयनगरीयांध्रगीर्वाणसाहित्यपरिषदध्यक्षाः श्रीमंतः इयूणि वेंकटवीरराघवाचार्याः विस्मृतसंस्कृतकाव्यावलीत्यभिधानेन कां चन लेखमालां आन्ध्रमासपत्रिकायां भारत्यां नाम रचितुमुपाक्रामन् । तत्र भारत्याः पुष्यमासीयसंचिकायां कालिदासविरचितकुन्तलेश्वरदौत्यविषये अद्यावध्यालंकारिकस्मरणसरण्या यावज्ज्ञातं तावत् सूक्ष्मभङ्ग्या प्रत्यपादयन् ॥

व्यासदासबिरुदलांछनः क्षेमेन्द्रः कुन्तेश्वरदौत्यतः एकं श्लोकं औचित्यविचारचर्चायां अधिकरणौचित्यवर्णनावसरे उल्लिखति ॥

"अधिकरणौचित्यं यथा कुन्तेश्वरदौत्ये (लकारलोपपाठः प्रामादिकः) काळिदासस्य—

इह निवसति मेरुः शेखरः क्ष्माधराणा-
मिह विनिहितभाराः सागरास्सप्त चान्ये ।
इदमहिपतिभोगस्तंभविभ्राजमानं
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥

कुन्तलेश (सेतुबन्धकाव्यनिर्मातृप्रवरसेन) स्य संसदि स्वप्रभुसमुचितमुच्चैरासनमलब्धवताऽपि प्रभुशासननिसर्वहणदूयमानमानसेन

कालिदासेन स्वगांभीर्यपरिपोषणायैवमुक्ता भूमावेवोपविष्टमिति संभाव-नीयम्। दौत्यानन्तरं निवृत्तः कालिदासः स्वप्रभुणा कुंतलेशवृत्तान्त-जिज्ञासुना "कालिदासः किं कुन्तलेश्वरः करोति" इति पृष्ट उक्तवान्—

असकलहसितत्वात् क्षालितानीवकान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि।
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः॥

इदमेवोहायित्वा विक्रमादित्यः प्रत्युवाच—

पिबतु मधुसुगन्धीन्याननानि प्रियाणाम्।
मयि विनिहितभारः कुन्तलानामधीशः॥

(शृंगारप्रकाशे अष्टमप्रकाशे)

कुन्तलेशः विक्रमादित्याभिमानपात्रमासीदिति भाति। असकलेत्यादि-श्लोकः काव्यमीमांसायां राजशेखरेण (880-920 A.B.D) उदटंकि। सेतुबंधकाव्यनिर्माणविषये तु प्रवरसेनास्थाने दौत्येन वसता कालि-दासेन प्रवरसेनमनसा कल्पितं काव्यं परिष्कृतमिति संभाव्यम्॥

## ३. मुकुटताडितकम्.

तस्या एव पत्रिकायाः फल्गुनीयसञ्चिकायां आचार्याः बाण-भट्टविरचितमुकुटताडितकनाटकं अधिकृत्य किंचिद्विलिखितुं यत्नं कृत-वन्तः। लेखेऽस्मिन् प्रायः भट्टबाणप्रशंसापरास्सूक्तय एव संगृ-हीताः। मुकुटताडितकविषयस्तु अतिसूक्ष्मतया लेखान्ते कतिपय-पङ्क्तिपरिमितं समसूचि। अत्रापि एक एव श्लोकः मुकुटताडित-कात् नलचम्पूकाव्यव्याख्यावसरे विजयगणिना चण्डपालेन च उट्टङ्कित इत्युक्तम्॥

अयं स सारतरश्लोकः—

"आशाः प्रोषितदिग्गजा इव गुहाः प्रध्वस्तसिंहा इव
द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव ।
बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां
जाताः क्षीणमहारथाः कुरुपतेर्देवस्य शून्याः सभाः ॥"

बाणस्य गद्यकवितायां यावन्नैपुण्यं तावत्पद्यबन्धे नासीदि... आलङ्कारिकाणामभिप्रायः । तथापि दृष्टेऽस्मिन् श्लोके काचन शङ्का उदेति । यद्बाणपद्यकाव्यानां लुप्तत्वात् तदीयगद्यकाव्यमध्यविंशकलितानां पञ्चषाणां श्लोकानां अनुशीलनेन अयमभिप्रायस्संजातो वा आलङ्कारिकाणामन्तरङ्गे इति ॥

भट्टबाणः संस्कृतकविपुङ्गवानां यथा आन्ध्रकवीश्वराणामपि तथैव वल्लभतम आसीदिति अत्र परिगुम्फितत्रिलिङ्गपद्यमालिकाभ्यः परिज्ञायते । अत्र भट्टबाणस्तुतिपराणि अनेकानि रम्याणि श्लोकरत्नानि विविधविस्मृतकाव्यपेटिकाभ्यः समुद्धृतानि ॥

तत्र सारतमानीमानि—

१. वागीश्वरं हन्त भजेऽभिनन्द-
मर्थेश्वरं वाक्पतिराजमीहे ।
रसेश्वरं स्तौमि च कालिदासं
बाणं तु सर्वेश्वरमानतोस्मि ॥

(उदयसुन्दरीचम्प्वां सोड्ढलः)

२. रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं ? तरुणि ? न हि न हि वाणी बाणस्य मधुरशीलस्य ॥

(विदग्धमुखमण्डने धर्मदाससूरिः)

३. जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥

(आर्यासप्तशत्यां गोवर्धनाचार्याः)

४. युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः ।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः ॥

(कीर्तिकौमुद्यां सोमेश्वरदेवः)

५ हृदयवसतिः पञ्च बाणस्तु बाणः ।

(प्रसन्नराघवे जयदेव)

शर्मण्यदेशीयः वेबर्नामा विद्वन्मणिः बाणगद्यं अपरिचित-पददुष्टमृगसंकुलविततमहारण्यमित्युपवर्णितवान् । तिष्ठतु स विचारः । पञ्चबाणायमानभट्टबाणसमपहृतान्तरङ्गाः भारतेयविद्वांसः प्राचीना नवीनाश्च ऐककण्ठ्येन बाणं यथा शशंसुः तथा सप्रपञ्चं प्रदर्श्य, यथावदनाघ्रातसंस्कृतसौरभ्यानां पाश्चात्यविदुषामभिप्रायाभासः अनादरणीय एवेति सूचयन्त्याचार्याः । अहो स्वतन्त्ररसिकता श्रीमदाचार्याणाम् ॥

सर्वचरितनाटकमपि भट्टबाणेन विरचितमिति अत्र सूचितम् ॥

(सं)

## महापाठशालावृत्तान्तः

---

अत्र तावत् श्रीमन्तो विद्वांसः नेरूरु कृष्णाचार्याः व्याकरणे, विद्वांसः डि वासुदेवाचार्याः द्वैतवेदान्ते, महाविद्वांसः वेङ्कटरामावधानिनः वेदभाष्ये, विद्वांसः गुण्डावधानिनः यजुर्वेदे, धाळीनरसिंहभट्टाः ऋग्वेदे, चन्नपुर्या आगताः विद्वांसः पि. आर्. शिवसुब्रह्मण्यशास्त्रिणश्च धर्मशास्त्रे प्रधानोपाध्यायपदवीमारोपिता इति महान् विजृम्भस्तस्य 'प्रोफेसर्' वर्गस्येत्यानन्दस्थानम् । एते महापुरुषाः स्वस्वगुरुवरचरणोपात्तानवद्यविद्यया स्वस्वानुभवोपबृंहितदिव्यसंविदा च शिष्यान् सम्यगनुगृह्णन्तीति निर्भराऽस्माकं चेतोवृत्तिः ॥

अथ श्रीमन्महीसूरु संस्थानविद्वत्परीक्षामहासभया विद्वत्कक्ष्याविद्यार्थिनां ज्ञानाभिवृद्धये उपक्लृप्तेषु तदातदा परिचितपाश्चात्यविमर्शे दीयमानेषु उपन्यासेषु सप्तेदानीं प्रपञ्चिताः—ते च इमे; अर्थशास्त्रविशारदैः विद्यालङ्कारैः डाक्टर् आर् शामशास्त्रिभिः भाषाशास्त्रमधिकृत्य द्वावुपन्यासौ पौरस्त्यपाश्चात्य नीतिशास्त्रमनश्शास्त्रे अधिकृत्य द्वौ, महापाठशालावृत्तान्तस्यास्य निवेदयित्रानेन वैदिकवाङ्मयानुमितार्यचरितमधिकृत्यैकः, तथा च राजधानीस्थ—इन्टर्मीडियट् कलाशालायाः गणितशास्त्रोपाध्यायैः श्रीमद्भिः ए.ए. कृष्णस्वामैय्यङ्गार्यैः खगोळमधिकृत्य द्वौ—इत्यभूतपूर्वो विन्यासः ध्रुवमुपकरोति किल विद्यार्थिनाम् ॥

अतीतयोर्नभोनभस्यमासयोः शुक्लसंवत्सरीया विद्वत्परीक्षाः यथापूर्वं प्रवृत्ताः । श्रीविद्यागणपति महासभानुबन्धिनः अष्टौ उपन्यासाः निखिलनिगमान्तरितामितज्ञानपयोधिविहारनिरङ्कुश ति मि ति मि ङ्गिलरूपैः

विद्वत्प्रकाण्डैः यथोचितं देवकर्णाटद्राविडभाषासु लोकहितायानुगृहीताः। तथा च श्रीमन्महाराजास्थानसम्मानितैः गानविशारदैः वैणिकप्रवीणै अन्यैश्च तादृशबिरुदसम्पादनोन्मुखैः सङ्गीतकलाविधज्ञैः अश्रुतपूर्वया गानपरिपाट्या सम्यगाराधितः श्रीमान् विद्यागणपतिः। एवं प्रति-सायमुपन्यासशास्त्रार्थसङ्गीतान्यतमेन सम्भाविता सभा सर्वानप्यु-त्तेजयति स्मेति सप्रमोदमावेदयामः॥

अयमन्यो हेतुर्विशेषस्यानन्दस्य। यदतीतायामाश्वयुजसित-त्रयोदश्यां बुधवासरे सायं राष्ट्रस्यास्य महामात्यः श्रीमान् सुगृहीता-मीनुन्मुल्क्—बि.ए.—सि.ऐ.इ.—ओ.बि.इ.—इति बिरुदावलीसमल-ङ्कृतः मिर्जा महमद् इस्मायिल् महाशयः पाठशालां बहुमन्यत स्वीय-नागमनेनेति। विदुषां समुचितमङ्गलाशासनैः वेदविदाममोघाशीर्वचनैः विद्यार्थिनां करास्फालनैश्च सुसत्कृतः अस्मदध्यक्षैः श्रीयोगनरसिंहार्यैः गम्भीरया वाण्या विशदीकृतान् महापाठशालोन्नतिहेतुकान् प्रासाद-निर्माण—विद्यार्थिनिलयप्रसारणोपाध्यायवेतनाभिवर्धनादिरूपानर्थान् सादरं मनसि कृत्वा प्रस्तुतं सर्वमपि काले सप्रसादमालोच्यत इति मधुरया गिरा-व्याजहार। तदनु फलपुष्पादिभिस्संवर्धितः तत्तदुचितकुशलादिप्रश्नेन सभ्यान् सम्मान्य विससर्जास्मानिति महदिदं प्रकरणं चिरं स्मरामः॥

शरद्विरामानन्तरं अश्वयुजासितषष्ठ्याः प्रभृति महापाठशाला नववत्सरीयकार्यजातं निर्वोढुं प्रावर्तत। विद्यार्थिनश्च स्वस्वव्यास-ङ्गानुगुणमानन्तर्यकक्ष्यासु स्थापितास्साधुवृत्ता व्यासङ्गिनश्च विजयन्ते-तरामिति शम्॥

"भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः॥"

(भासः)

**एच्. एल्. हरियप्प.**

# स म्पा द की य स मि ति ः.

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः( रेजिस्ट्रार् )

२. श्रीमन्तः अर्थशास्त्रविशारदाः, महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः बि.ए., पिएच्. डि., एं. आर्. ए. एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्त महापाठशाला विशिष्टाद्वैत वेदान्त प्रधानोपाध्यायाः

६. महामहोपाध्याया विद्यनिधयः ब्र.श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्त प्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल्. हरियप्पाः, एं.ए., महापाठशालोपाध्यायाः

# विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलाससुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः. तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम्॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत्॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते।
दया मैत्री च भूतेषु दानं च मधुरा च वाक्॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.

३. विभिन्नदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

# सम्पादकीयसमितिः

१. श्रीमन्तः विं. सुब्रह्मण्यार्याः, बि.ए.
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः( रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः, महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः बि.ए., पिएच्. डि., एं. आर्. ए. एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्त महापाठशाला विशिष्टाद्वैत वेदान्त प्रधा-नोपाध्यायाः

६. महामहोपाध्याया विद्यानिधयः ब्र.श्री. विरूपाक्षशास्त्रिणः महा-पाठशालायामद्वैतवेदान्त प्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल्. हरियप्पाः, एं.ए., महापाठशालोपाध्यायाः

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

> यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
> परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
> न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
> दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)

२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.

३. विभिन्नदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृतिः पृथक्

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः, एम्.ए.,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः "

(ईशोपनिषत्)

सम्पुटम् ६] एप्रिल्-१९३० [सञ्चिका २

## बोधायनवृत्तिकारगतः सन्देहः

पाठशालापत्रिकायाः पञ्चमसम्पुटस्य तृतीयचतुर्थसञ्चिकयोः विशिष्टाद्वैतमधिकृत्य महामहोपाध्यायैः पण्डितरत्नं लक्ष्मीपुरं श्रीनिवासाचार्यैः प्रकाशितं लेखं दृष्ट्वा तत्र बोधायनटङ्कद्रमिडाख्यपूर्वाचार्यत्रयविषये संजातसन्देहोऽहं तत्र ममाभिप्रायं किञ्चिदुपन्यासितुमिच्छामि । आशासे च यद्बहुश्रुताः श्रीमदाचार्याः मम सन्देहान् दूरीकुर्युरिति ॥

चतुर्थसंञ्चिकायाः १७७ तमे पृष्ठे एवं लिखितं दृश्यते—वृत्तिः-बोधायनाचार्यः–(उपवर्ष इति नामान्तरं)–कृतकोटिः' 'वाक्यं—ब्रह्मनन्दी टङ्काचार्यः छान्दोग्यव्याख्यानम्' 'भाष्यं वाक्यव्याख्या–द्रमिडाचार्यः' इत्यादि तत्र वाक्यकारद्रामिडभाष्यकारयोर्विषये यद्वक्तव्यं

तल्लेखान्तरे निवेदयिष्यामि । तत्र तावद्बोधायनगतं किञ्चिद्विचारयामः । बोधायनवृत्तिकार एव शङ्करभाष्यकृता खण्डनाय परामृष्टो वृत्तिकार इति थीबोनाम्ना केनचित्पाश्चात्यसंशोधकेन कतिपयेभ्यो वर्षेभ्यः प्राक्कृते स्वीये शाङ्कर भाष्यस्यांग्लपरिवर्तने भूमिकायामुपक्षिप्तम् । तदा प्रभृति तमनुसृत्य अस्मद्देशीया अपीदानीं केचिद्भणन्ति श्री भाष्य-समुदाहृतबोधायन एव शङ्करभाष्यपरामृष्टो वृत्तिकार इति । पण्डितवराः श्रीनिवासाचार्याश्चैतमेवाभिप्रायं अनुवदन्ति साम्प्रतलेखने । अधिका-वापं च कुर्वन्ति स एव उपवर्षः कृतकोट्यपरनामा इति ॥

अत्र त्रेधा विभज्य विचारणीयमस्ति—(१) शङ्करभाष्ये किमेक एव यः कश्चन वृत्तिकारः परामृष्टः, उतानेके इति । (२) बोधायन-वृत्तिकारः तत्र भाष्ये यत्रकुत्रापि खण्डनाय मण्डनाय वा परामृष्टो न वेति । (३) बोधायन एव उपवर्ष इत्यत्र प्रमाणं अस्ति वा नवेति । प्रथमं तावत् शाङ्करभाष्ये एक एव वृत्तिकारः परामृष्ट इति वक्तुं न पार्यते । प्रत्युत विद्यन्ते स्म बहवो वृत्तिकारा इत्यत्र गमकमस्ति । यथा चैतत्तथा किञ्चिदुदाह्रियते—ब्रह्मजिज्ञासेत्यत्र 'ब्रह्मणो जिज्ञासा' इति विग्रहवाक्यं प्रदर्शितं भाष्ये । तत्रानन्दगिरिणोक्तं 'वृत्तिकारा-भीष्टचतुर्थीसमासनिरासेन षष्ठीसमासमाह' इति । तदुपरि 'ब्रह्मण इति कर्मणि षष्ठी, न शेषे' इति भाष्यम् । तत्र चानन्दगिरिर्जगाद-'वृत्त्यन्तरे शेषे षष्ठी व्याख्याता तत्राह' इति । अत्र 'वृत्त्यन्तरे' इति वचनस्वारस्यात् चतुर्थीसमासपरिगृहीतुस्तावद्वृत्तिकारोऽन्यः शेष-षष्ठीपरिगृहीतास्तीति विस्पष्टं विज्ञायते । भाष्ये एव उपासनाविधि-वादप्रसङ्ख्यानवादप्रपञ्चविलयवादादीनां अद्वैतवादानामुदाहृत्य खण्ड-नादप्येष एवाभिप्रायो दृढीभवति वृत्तिकारा बहवश्शङ्करभाष्यसमुदाहृता इति । अपि च पञ्चपादिकादिषु ग्रन्थेष्वनेकेषां वृत्तिकृतां वचनान्यपि

दरीदृश्यन्ते । जिज्ञासासूत्रव्याख्यानावसरे वृत्त्यनेकत्वमप्युल्लिखितं तत्रैव—'तथा च वृत्त्यन्तरे वर्णितम्' इति, 'अन्यैरपि स्ववृत्तौ वर्णितम्' इति च (अथशब्दार्थवादे)। तदेवं नास्ति शङ्करभाष्ये कस्याचिदेकस्यैव वृत्तिकारस्य परामर्श इत्यवगम्यते ॥

अथ सत्यपि वृत्तिकारानेकत्वे बोधायनवृत्तिकारं शङ्करभगवत्पादाः परामृशन्ति स्म नवेति विचारणीयम्। तत्र श्रीभाष्योदाहृतानि बोधायनवृत्तिग्रन्थवाक्यानि सप्तैवेति परिगणितानि श्रीमद्भिः श्रीनिवासाचार्यैः। शङ्करभाष्ये तु तानीमानि न कुत्राप्युदाहृतानि दृश्यन्ते, नाप्यद्वैत भाष्यव्याख्यातारः समुदाजहुरमीषां वाक्यानामन्यतममपि । किञ्च यत्र शाङ्करभाष्ये प्राचीनमतं खण्डितं व्याख्यानकारैश्च वृत्तिकारमतत्वेन व्यपदिष्टं, तत्र यत्रकुत्रचिदपि श्रीभाष्यकृता वृत्तिकारमतं समुद्धृतं चेत्स्यादपि बोधायनः परामृष्टस्तत्रेति । न त्वेवं दृश्यते । तदेवं नास्ति गमकं शङ्करभाष्योदाहृतेषु बहुषु वृत्तिकारेषु मध्ये बोधायनसमावेशोऽप्यस्तीति ॥

अथेदं विचारणीयं—बोधायन एव उपवर्ष इत्यत्र प्रमाणमस्ति वा न वेति। यदि प्रमाणमस्ति, तर्हि बोधायनः प्राचीनतरो भवति न केवलं शङ्करभाष्यकारात् किंतु तत्पूर्वतरात् शबरस्वामिनोऽपि। यत्कारणं मीमांसाभाष्ये एतद्वाक्यं समुपलभ्यते—अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति। शङ्करभाष्यव्याख्याकारेण चानन्दगिरिणा वृत्तिकारत्वेन व्यपदिष्टोऽस्त्युपवर्षः (ऐकात्म्याधिकरणभाष्यव्याख्याने)। अतो उपवर्ष एव बोधायनश्चेत् ततः स शङ्करशबराचार्याभ्यामुभाभ्यामपि प्राचीनतर इति सिद्ध्यति। परंत्वत्र प्रमाणं किञ्चिदप्यहं न पश्यामि

यतः श्रीरामानुजभाष्ये क्वचिदपि उपवर्षत्वेन न वर्णितो वृत्तिकारः। नापि शङ्करभाष्ये शबरभाष्ये वा बोधायननाम्ना गृहीतो भगवानुपवर्षः। किं चान्यत्–ऐकात्म्याधिकरणे शङ्करभाष्ये समुदाहृतमिदं उपवर्षवाक्यं 'अत एव भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्यामि इत्युद्धारः कृतः' इति श्रीभाष्यकृता तु एतदेवाधिकरणं प्रत्यगात्मोपासनापरत्वेन अन्यथैव व्याख्यातं, उपवर्षवाक्यस्यानादरे कारणमपि नोक्तम्। अतोऽप्यनुमीयते बोधायनोपवर्षयोरैक्यं नानुमन्यते श्रीभाष्यकार इति ॥

यत्सत्यं श्रीभाष्यकारादर्वाचीना विशिष्टाद्वैतग्रन्थप्रणेतारस्तत्र तत्र स्पष्टं लिखन्ति बोधायन एव उपवर्ष इति। इदानींतनाश्च केचिदभिप्रयन्त्यद्वैतिनोऽपि बोधायन एव स्याद्वृत्तिकारः शङ्करभाष्यपरामृष्ट इति। तथाप्युपरिनिर्दिष्टसन्देहनिवारणं विना तदेतदर्वाचीनमतं न विमर्शकबुद्धिमारोहत्यनाकुलम्। अतोऽवश्यनिर्धारणीयमेतत् श्रीभाष्यकारैः तत्प्राक्तनैर्वा यैःकैश्चिद्बोधायनोपवर्षयोरैक्यं स्वीकृतमास्ति आहोस्विन्नेति ॥

अत्रायमन्योऽपि मम सन्देहः–श्रीभाष्यकाराः साक्षाद्बोधायनवृत्तिं पुरतो निधाय ततो वाक्यसप्तकमाचार्यवरैः परिसङ्ख्यातमुदाहृतवन्तो वा, उत स्वसम्प्रदायागतमेव तत्र तत्र निर्दिष्टवन्तो वेति। श्रीभाष्यं हि महत्परिमाणो ग्रन्थः। तत्र वाक्यसप्तकमेव केवलं समुदाहृतं विस्तीर्णाद्वृत्तिग्रन्थादिति चित्रीयते मन्मनः। यदपि श्रीभाष्यगतं वाक्यं 'भगवद्बोधायनवृत्तिकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति। तत्र तन्मतानुसारेणेति तदा परामृष्टं किं बोधायनमतं, अथवा बोधा-

यनवृत्तिसङ्ग्राहकपूर्वाचार्यमतं–इति सन्देहास्पदमेव भाति। प्रचलति च किंवदन्ती विशिष्टाद्वैतिषु यच्छ्रीरामानुजाचार्य वृत्तिग्रन्थमन्वेषमाणः सुदूरं प्रयातः काश्मीरपुस्तकालयस्थमेकमेव ग्रन्थं अतिक्लेशात्कोशाधिकार्यनुमत्या सकृद्दर्शनार्थं संप्राप्तवानिति एकसन्धिग्राही च तच्छिष्यः समग्रं वृत्तिग्रन्थं तत्रैव पपाठ, श्रीभाष्यरचनवेलायां वृत्तिवाक्यानि भाष्यकृते तत्र तत्र निवेदयामासेति च। अतः श्रीरामानुजाचार्यकाले एव बोधायनग्रन्थः सुदुर्लभ आसीदित्यवगम्यते। तदेवं बोधायनग्रन्थः श्रीभाष्यकारेण तदन्येन केनचिद्वा साक्षाद्दृष्ट इति यावन्नोपपाद्यते तावत् बोधायनमतानुसारी वा न वा श्रीभाष्यकाराभिप्राय इत्यत्रैव सन्देहोऽनिवारणीयः स्यात्॥

यद्यपि केवलं प्राचीनत्वेन अर्वाचीनत्वेन वा कस्यचिदपि सिद्धान्तस्य निर्दोषत्वं सदोषत्वं वा अभ्युपगन्तुं न न्याय्यम्। तथापि सम्प्रदायशुद्धमेव वैदिकं मतं साम्परायिकफले उपयुज्यत इति दृढाग्रहवतां सम्प्रदायतत्त्वमपि अवश्यं विचारणीयमेव भवति। ऐतिहासिकदृष्ट्या तु विचार्यमाणे यद्यपि प्रयोजनान्तरं नास्ति, तथापि 'को नु खलु स्यादयं भगवान् बोधायनः' इति विमर्शः तद्ग्रन्थलाभे तदभिप्रायनिर्धारणे च सहकारी भवेदिति सर्वथा विचारणीय एवायं विषयः॥

अतोऽहं सविनयं संप्रार्थये महामहोपाध्ययान् श्रीनिवासाचार्यान् चिरपरिचितानेकग्रन्थान्, यथोक्तसन्देहपरिहारेण छात्रजनबुद्धिवैशद्यानुग्रहार्थं बोधायनवृत्तिकारस्य कालमधिकृत्य यत्किञ्चिल्लेखान्तरं कृपया पत्रिकायां प्रकाशयितव्यमिति॥

य. सुब्रह्मण्यशर्मा.

## * मुरारिविरचितैकादशाद्यधिकरणम्

सुविदित एव खलु मीमांसकमूर्धन्यो मुरारिमिश्रानामा सर्वेषां पण्डितप्रकाण्डानां । तेन च जैमिनिप्रणीतायाः द्वादशलक्षण्याः समग्रं व्याख्या निर्मितेति च ज्ञायते । अथापि सा व्याख्या अद्यावधि विरलप्रचारा वर्तते—अपरा च तत्कृतिरङ्गत्वनिरुक्तिनाम्नी अमुद्रितापि तत्र तत्र मीमांसकैः पाठप्रवचनादिभिः प्रचारिता दरीदृश्यते । अयं मुरारिमिश्रः भाट्टमतानुसारीति अङ्गत्वनिरुक्तिस्थप्रतिज्ञाश्लोकेन ज्ञायते । यथा—

मुरारिसंसेवनशुद्धबुद्धिः कुमारिलप्रोक्तमतानुसारी ।
मुरारिरङ्गत्वनिरुक्तिमेतां करोति सद्युक्तिगणैरुपेताम् ॥

इति । अस्य तर्कशास्त्रे महती निष्णातता च तत्कृताङ्गत्वनिरुक्तिपरिशीलनेनैवावबुद्ध्यते । तथा तद्ग्रन्थसमाप्तौ तेनैवोक्तं—

मुरारिनिर्मिता न्यायमीमांसावासितात्मनां ।
तोषाय विदुषामेषा कण्ठभूषा प्रकल्प्यताम् ॥

इति । एनामङ्गत्वनिरुक्तिमपरिशीलितन्यायनयाः पाठयितुं न शक्नुवन्ति च । तदीयग्रन्थमध्ये द्वादशलक्षणीविवरणे एकादशाद्याधिकरणमात्रं इदानीं उपलब्धा समस्ति तत्र किंचिद्विमर्शयामः । भगवान् जैमिनिर्महर्षिरनेकोद्देशेन सकृदनुष्ठानरूपतन्त्रविचारात्मकं एकादशाध्यायं सूत्रयामास । तत्र किञ्चित्प्रकृतं प्रस्तूयते । दर्शपूर्णमासयोः आग्नेयः पुरोडाशयाग. उपांशुयाजः आज्यद्रव्यकः अग्नीषोमीयः पुरोडाशयागः एते त्रयः पूर्णमाससंज्ञकाः आग्नेयः पुरोडाशयागः ऐन्द्रो दधियागः ऐन्द्रः पयोयागः एते त्रयः अमावास्यासंज्ञकाः एवं षड्यागाः

---

* Annals of the Bhandarkar Oriental Research Institute—इत्यस्याः त्रैमासिक्याः पत्रिकायाः दशमे संपुटे श्रीउमेशमिश्रैः प्रकाशितम् । अस्य ग्रन्थस्य एकैव मातृका नेपालमहाराजपुस्तकभाण्डागारे अलाभीति प्रकाशकैर्निवेदितम् ॥

प्रधानानि । एतेषां षण्णां यागानां प्रयाजादीन्यङ्गान्याम्नातानि । तान्यङ्गानि प्रधानभेदेनावर्तनीयानि वा उत सकृदेव सर्वार्थमनुष्ठेयानि वेत्यादि विचारः एकादशाध्याये क्रियते । तत्राद्याधिकरणमुपोद्धातरूपं शबरस्वामिप्रभृतिभिः तस्मिन्नधिकरणे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतिवाक्यबोधितं फलं षण्णामपि यागानामेकमुताभिन्नमिति सन्दिह्य उत्पत्तिवाक्ये अन्योन्यनैरपेक्ष्येणोत्पन्नानां फलाकांक्षायां नैरपेक्ष्येणैव फलसम्बन्धकरणात् प्रयोगोऽपि षण्णां भिद्यत इति प्रतिप्रयोगं अङ्गान्यावर्तनीयानीति पूर्वपक्षं प्रापय्य फलवाक्ये षण्णां यागानां एतेन यजिना उपादानात्साहित्यावगतः सहितानां षण्णामेकं फलमिति प्रयागो न भिद्यते । य एवं विद्वान् पौर्णमासीं यजते इति वाक्ये न पौर्णमासीनामकानां त्रयाणां यागानामेकः प्रयोगः य एवं विद्वा-नमावास्यां यजत इत्यनेनामावास्यासंज्ञकानां त्रयाणामेकप्रयोगः इति त्रयाणां त्रयाणामेकैकप्रयोगविधानात् पौर्णमासप्रयोगे त्रयार्थमङ्गानां सकृदनुष्ठानं अमावास्याप्रयोगे तत्त्रयार्थं सकृदनुष्ठानमिति न षण्णा-मर्थे षड्वारमावर्तनीयान्यङ्गानीति सिद्धान्तितं । शास्त्रदीपिकाकार-प्रभृतिभिरपि तदधिकरणं यथाभाष्यमुपवर्णितं । मुरारिमिश्रेण तु दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेतेतिवाक्ये श्रूयमाणं स्वर्गकामपदं स्वर्ग-कामरूपकर्तारं वा स्वर्गकामनां वा स्वर्गकामनाकालं वा अंगत्वेन विद-धाति उत फलसंबन्धं विदधातीति सन्दिह्य स्वर्गकाम इति कर्तृविभक्ति-श्रवणेन स्वर्गकामं कर्तारं विदधातीति पूर्वपक्षयित्वा कर्तुराक्षेपादेव प्राप्तेर्नविधानमिति तत्पदं स्वर्गरूपफलविधायकमेवेति सिद्धान्तितम् । अयं विचारः भाष्यकारादिविचारं विरुणद्धीव उपोद्धातरूपतां जहा-तीव च प्रतिभाति । न तथा मन्तव्यं । कर्त्रादिविधायकत्वफलस-म्बन्धविधायकत्वविचारस्य फलभेदाभेदविचारफलकत्वात् । तथा हि यदि स्वर्गकामपदेन कर्त्रादिकं विधीयेत तदा यागानां फलाकांक्षायां

विश्वजिदधिकरणन्यायेन कल्प्यमानं फलं भदेनैव कल्प्येत तदा प्रयोगोऽपि भिद्यत इति अङ्गानामावृत्तिः सिद्ध्यति। यदि स्वर्ग कामपदं स्वर्गरूपफलसम्बन्धं विदधाति तदा तत्राभिधानावगतसाहित्यस्य उपादेयगतत्वेन विवक्षितत्वात् सहितानामेव फले विधानात्समुदितानामेकं फलमिति सिद्ध्यतीति न भाष्यादिविरोधः फलैक्ये प्रयोगभेदाभावान्नावृत्तिरङ्गानामिति नोपोद्घाततापरित्यागः। ननु षष्ठाद्ये यजेत स्वर्गकाम इत्यादौ यागभावनायाः भाव्याकांक्षायां धात्वर्थस्य समानपदोपात्तस्य भाव्यत्वं पूर्वपक्षयित्वा इष्टभाव्यकत्वाभावे प्रवृत्त्यनुपपत्तेः स्वर्गकामपदोपात्तस्वर्गस्यैव भाव्यत्वमिति सिद्धान्तितं। अतः स्वर्गकामपदस्य फलपरत्वं सिद्धमेवेति अस्य विचारस्य पौनरुक्त्यमिति चेत्। न पुनरुक्तो भवत्ययं विचारः। षष्ठाद्ये प्रवृत्तिसिद्ध्यर्थं पुरुषार्थभाव्यकत्वं वक्तव्यमित्येव तत्र सिद्धान्तः। न तु स्वर्गकामपदस्य फलपरत्वमिति। अत्र तु स्वर्गकामपदस्य फलपरत्वतदभाववीचारस्य चिकीर्षितत्वेन पुनरुक्तताशङ्काया नावकाश इति। अत्रेदं चिन्तनीयं। एतदीयाधिकरणरचना पूर्वोक्तरीत्या उपपत्तिमत्यपि कथं सूत्रलभ्या भवति मुरारिणा प्रथमवर्णकत्वेन अयं विचारः प्रवर्तितः। तस्य सूत्रानारूढत्वे वर्णकत्वं कथं। तस्मिन्नधिकरणे चत्वारि सूत्राणि सन्ति—

प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥१॥

शेषाद्वा प्रयोजनं प्रति कर्मविभज्येत ॥ २ ॥

अविधानात्तु नैवं स्यात् ॥ ३ ॥

शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥

इति। एतेषु सूत्रेषु कस्य सूत्रस्यैतद्विचारपरत्वमिति शङ्का सुधीभिर्मीमांसानिपुणैः परिहरणीयेति शिवम् ॥

**आरडि कुप्पं. सुब्रह्मण्यशास्त्री.**

---

त्रिधा निहितः २१. २१. २१. । एभ्यः एष्वग्रेषु ५, ७, ९ त्यक्तेषु जाताश्छेदाः षोडश, चतुर्दश, द्वादश । एषां क्रमेणाग्राण्यनन्तर-प्रदर्शितान्येव ५. ७, ९. । एभिरग्रैरेतैश्छेदैश्च भिन्न-बहुभागहारभिन्न-बह्वग्रभाज्यराश्यानयनप्रकारेणानीतो भाज्यराशिः शररसरामेन्दु (१३६५) संख्यः । अयं षोडशभिः पञ्चाग्रः । चतुर्दशभिस्सप्ताग्रः । द्वादश-भिर्नवाग्रः । अयमेव भाज्यराशिरग्रयोगेन कुपक्ष (२१) संख्येन हीन-श्चेदेभिश्छेदैर्निरग्रो भवति । एवमेवंप्रकारा भाज्यराशय आनेतव्याः । नन्वनन्तरयोः प्रश्नयोः—

"स एवाग्रैक्ययुक्तश्चेत्तैर्हरैरेव शुद्ध्यति ।
स एवाग्रैक्यं हीनश्चेत्तैर्हरैरेव शुद्ध्यति ॥"

इति च निरग्रता प्रतीयते । तदनुपपन्नमनयोः साग्राधिकारे कथनम् सत्यं—

"को राशिः कैर्हरैर्भिन्नै-
र्भक्तो भिन्नावशेषकः ॥"

इति निरग्रतापि दृश्यत इति युक्तमुक्तम् ॥

अथ कक्ष्याकुट्टाकारः प्रदर्श्यते । अत्रादौ कक्ष्याग्रहानयन ज्ञातव्यम् । अतस्तदुच्यते—

खव्योमखत्रयखसागरषट्कनाग-
व्योमाष्टशून्ययमरूपनगाष्टचन्द्राः ॥
(१८७१२०८०८६४०००००)

(सूर्यसिद्धान्ते १२ अध्याये श्लो ९०.)

इति भगवता सूर्येणोपदिष्टयाऽऽकाशकक्ष्यया गुणिते स्वेष्टदिनगणे सह-स्राहतेन ग्रहकक्ष्याभूदिनसंवर्गेण विभक्ते लब्धं भगणादिग्रहो भवेत्

शेषं कक्ष्याग्रम् । इष्टदिनानां खकक्ष्या गुणाकारः; सहस्रगुणो ग्रह-कक्ष्याभूदिनसंवर्गो भागहारः । एतावपवर्तिताविष्टदिनानां गुणहरौ भवतः, एतस्मिन्पक्षेऽपवर्तितयाकाशकक्ष्यया निहते स्वाभिमतदिनगणेऽप वर्तकेन सहस्रनिहतग्रहकक्ष्याभूदिनाभ्यासेन विहृते लब्धं भगणादिग्रहः। शेषं कक्ष्याग्रम । अथवा खकक्ष्याभूदिनयोरपवर्तितयोर्यत् खकक्ष्यातो लब्धं तदिष्टदिनानां गुणः । यत्तु भूदिनतो लब्धं तेन सहस्रगुणितेन गुणिता ग्रहकक्ष्या-तेषां भागहारः । अस्मिन्पक्षे पुनरिष्टदिनगणेऽप वर्तितया खकक्ष्यया गुणिते सहस्रगुणितेनापर्तितभूदिनेन गुणितया ग्रहकक्ष्यया विभक्ते लब्धं भगणादिमध्यग्रहः शेषं कक्ष्याग्रम् । एवं त्रिभिः प्रकारैः कक्ष्याग्रहानयनं कक्ष्याग्रं चोक्तम् । एष्वन्तिमप्रकारे यत्कक्ष्याग्रं तदेवोद्दिश्यते । अस्य भागहारः सहस्रघ्नेनापवर्तितभूदिनेन गुणिताग्रहकक्ष्या ॥

उद्देशकः—

कक्ष्याग्रं सवितुः खखाक्षिशिखरिक्ष्माक्ष्यद्रिचन्द्राकृति—
द्व्यर्थाब्ध्यब्धिरसाभ्रतर्ककरभूसख्यं मृगाङ्कस्य तु ।
(१२६०६४४५२२२१७२१७२००)
लक्षघ्नाभ्रकरार्थबाणनवकद्व्यष्टेशनागर्त्वगा—
द्व्यग्रं भाज्यमहर्गणं च भगणान् यातान् रवीन्द्वोर्वद ॥ २२
(७७३८११८२९५५२०००००)

न्यासः—रवेःकक्ष्याग्रमिदम् ।

(१२६०६४४५२२२१७२१७२००) इदमत्राधिकाग्रम् । अथ खकक्ष्याया भूदिनयोः, "विभजेद्धारविभाज्याविति" परस्पर-भक्तयोश्शेषं वेद (४) संख्यम् । एष खकक्ष्या—भूदिनयोरपवर्तकः । अनेनापवर्तिता खकक्ष्या प्रयुतघ्ननृपद्व्यभ्राद्रिखाष्टाद्रिरसाब्धि (४६७८०-

२०२१६००००००) संख्या। अपवर्तितं भूदिनम् अचलार्थक्रुताङ्काद्रिवेदाब्धिनवपावक (३९४४७९४५७) संख्यम्। एतत्सहस्रगुणितम् ३९४४७९४५७००० अथानपवर्तितायां खकक्ष्यायां सहस्रघ्नैर्युगग्रहभगणैर्विभक्तायां योजनात्मिका ग्रहकक्ष्या भवतीति लब्धा रविकक्ष्या। द्वादशयोजनषष्ट्यंशसहितखखातिथिरामाग्निवेद ४३३१५०० $\frac{१२}{६०}$ संख्या। एषा पूर्वलिखितसहस्राहतापवर्तितभूदिनाभ्यस्ता व्योमाभ्रशक्रनवाविश्वनवाष्टतर्कवेदाष्टशैलगजषड्गुसुखाद्रिचन्द्र (१७०८६८७८४६८९१३९१४००) संख्या। अयमत्राधिकाग्रभागहारः। चन्द्रस्य कक्ष्याग्रमिदम् (७७६८११८२९५५२०००००) एतदिहानाग्रं प्रागुक्तक्रमलब्धमेव। चन्द्रकक्ष्या खत्रयाब्धिद्विदहन (३२४०००) संख्या। एषा सहस्रघ्नापवर्तितभूदिनगुणिता प्रयुतघ्नाष्टषट्खाब्धिवेदाग्नीशाष्टाद्यर्क (१२७८११३४४०६८००००००) संख्या। अयमत्रोना–ग्रभागहारः। अग्रान्तरं खखाक्ष्यत्यष्टि—द्वीषुरसषड्द्व्यङ्कर्तुद्विरामाष्टत्रिगजेश (११८३८३२६९२६६५२१७२००) संख्यम्। अत्रैतेऽधिकाग्र भागहारोनाग्र भागहाराग्रान्तर राशयोऽपवर्तनं प्रयच्छन्तीत्यपवर्त्यप्रदर्श्यन्ते। अत्रापवर्तकः पूर्णाभ्रतर्काकृति–खाग्नि–तर्कव्योमाभ्र–चन्द्रगिरि (७१००६३०२२६००) संख्यः। अनेनापवर्तितोऽधिकाग्रभागहारो नवाष्टत्रिषट्खसिद्ध (२४०६३८९) संख्यः। अपवर्तितो–नाग्रभागहारोप्ययुत-गुणधृति (१८००००) संख्यः। अपवर्तिताग्रान्तरं द्व्याकृतिमुनिरसनृप (१६६७२२२) संख्यम्। एभि "रधिकाग्रच्छेदगुणभि" त्येतदन्तेनकर्मकदम्बेन जातोराशिः वसुमुनिगिरिरविगजाब्धि (४८१२७७८) संख्यः। अयमत्र केनापवर्तकेन गुणितोऽधिकाग्रयुक्तश्चार्बुदाहताष्टि–द्विनख–खाष्टाद्रि रसासिन्धु (४६७८०२०२१६००००००००) संख्यः। अयं द्विच्छेदाग्रो भाज्यराशिः

अस्मिन्नपवर्तित खकक्ष्यया गुणेन विभक्ते लब्धो राशिः सहस्र (१०००) संख्यः। एष स्वेष्टदिनगणः। अथ द्विच्छेदाग्रे भाज्यराशावनपवर्तितेनाधिकाग्रभागहारेण द्विच्छेदेन हृते लब्धौ गतौ रविभगणौ द्वौ (२) शिष्टमुद्दिष्टरविकक्ष्याग्र-तुल्यम्। अथ द्विच्छेदाग्रे भाज्यराशावेवानपवर्तितोनाग्रभागहारेण चन्द्रच्छेदेन विहृते लब्धा गताश्चन्द्रभगणाः षट्त्रिंशत् (३६) शेषमुद्दिष्टरविकक्ष्याग्रसमम्। एवं द्वयोः कक्ष्याग्रयोरुद्दिष्टयोस्सतोरानयनप्रकारः। बहूनां कक्ष्याग्रेषूद्दिष्टेषु भिन्नबहुभागहारभिन्नबह्वग्रयोः कुट्टाकारानयनप्रकारेण भाज्यराश्यहर्गणगतभगणास्साध्याः। एवं सूर्यसिद्धान्तमार्गमवलम्ब्य कक्ष्याकुट्टाकारानयनं प्रदर्शितम्। आर्यभटीयानुसारेण कक्ष्या–कुट्टाकारानयने तु विशेषः। अत्र सूर्यसिद्धान्तानयनमार्गेणैतदानयने यत्र यत्र सहस्रगुणनमुक्तं तत्तदिह न कर्तव्यम्। अन्या सर्वाऽपि प्रक्रिया समाना। अथ खिलविशेषानुपपन्नप्रश्न उदाह्रियते। उद्देशकः—

योष्टाभिर्नवभिष्षड्भि
  र्दशभिश्चतुरग्रकः।
द्व्याद्यैश्चतुर्भिरेकाग्र
  स्तं राशिं व्याहराञ्जसा ॥ २३ ॥

अत्र षड्भिरष्टभिर्वा यो राशिश्चतुरग्रो भवति स कथं चतुर्भिर्द्वाभ्यां वा रूपाग्रो भवतीत्यालोच्य प्रश्नोऽयमनुपन्न इति ब्रूयात्। एवमन्येऽप्यनुपपन्नाः प्रश्ना बोद्धव्याः। अथ खिलविषय उदाह्रियते। उद्देशकः—

द्विचत्वारिंशताद्व्यग्रः
  षड्विंशत्यैकशेषकः।
यो राशिस्तं द्रुतं ब्रूहि
  साग्रं वेदभवान्यादि ॥ २४ ॥

अत्र पूर्ववदागतानि प्रत्येकं रूपात्मकान्युपर्यधोभावेन निहितानि फलानि १ । शेषयोरुपरिराशिर्लोचन (२) संख्यः । अधो राशिर्वेद
१
१
१
(४) संख्यः । अत्र मतिः कल्पयितुं न शक्यते तस्मादिह भाज्यराशिः खिल इति वक्तव्यम् । यत्र च्छेदयोरपवर्तकोऽस्ति सोऽग्रान्तरस्य तु नास्ति । तत्र भाज्यराशेः खिलत्वं द्रष्टव्यं । यत्रैषां त्रयाणामपि सदृशोऽपवर्तकोऽस्ति तदभावो वाऽत्राखिलत्वं द्रष्टव्यम् । एवं साग्रविषयेऽधिकाग्रादिसूत्रयुगं प्रतिपत्तॄणां बुद्धिव्यामोहो माभूदित्येकयैव च रीत्या व्याख्यातम् । अथैतदेवात्र किञ्चिद्विकल्प्य व्याक्रियते । पूर्वं "शेषपरस्परभक्तं मतिगुणमग्रान्तरे क्षिप्तमि" त्यत्रफलपङ्क्त्यां समायां सत्यामग्रान्तरं समं कृत्वा मतिं कल्पयित्वा तथाऽल्पमुपरिराशिं गुणयित्वा तच्चाग्रान्तरे क्षिप्त्वा तदधोराशिना हृत्वा लब्धं समपङ्क्तीनां फलानामधोनिहितायामतेरधस्तान्निदध्यादित्युक्तम् । इदानीं तत्र विषमायां फलपङ्क्त्यामग्रान्तर—मृणं कृत्वा मतिं परिकल्प्य तथाऽल्पमधोराशिं संगुण्य तस्मादग्रान्तरं विशोध्य तदुपरिराशिना विभज्य लब्धं विषमपङ्क्तीनां फलानां मध्ये दत्ताया मतेरधः स्थापयेदित्युच्यते । अन्यत्सर्वं पूर्ववत् । एवं कृतेऽपि पूर्वप्रदर्शितमखिलमुदाहरणजातं प्रायशः सेत्स्यत्येव । अस्मिन् पक्षेऽ "ग्रान्तर" इत्यन्तं विभक्तिविपरिणामो द्रष्टव्यः अग्रान्तरेणेति । छन्दोवत् सूत्राणिभवन्तीत्युक्तत्वात् । छन्दसि हि विभक्तिविपरिणामः प्रसिद्धः । क्षिप्तमित्येतदवहीनमित्यस्योपलक्षणम् । तस्मादग्रान्तरेणोनामिति सिद्धं भवति । तथैवास्तु पाठः ॥

अस्मिन्नपवर्तित खकक्ष्यया गुणेन विभक्ते लब्धो राशिः सहस्र (१०००) संख्यः। एष स्वेष्टदिनगणः। अथ द्विच्छेदाग्रे भाज्यराशावनपवर्तितेनाधिकाग्रभागहारेण द्विच्छेदेन हृते लब्धौ गतौ रविभगणौ द्वौ (२) शिष्टमुद्दिष्टरविकक्ष्याग्र-तुल्यम्। अथ द्विच्छेदाग्रे भाज्य-राशावेवानपवर्तितोनाग्रभागहारेण चन्द्रच्छेदेन विहृते लब्धा गताश्चन्द्रभगणाः षट्त्रिंशत् (३६) शेषमुद्दिष्टरविकक्ष्याग्रसमम्। एवं द्वयोः कक्ष्याग्रयोरुद्दिष्टयोस्सतोरानयनप्रकारः। बहूनां कक्ष्याग्रेषूद्दिष्टेषु भिन्नबहुभागहारभिन्नबह्वग्रयोः कुट्टाकारानयनप्रकारेण भाज्य-राश्यहर्गणगतभगणास्साध्याः। एवं सूर्यसिद्धान्तमार्गमवलम्ब्य कक्ष्या कुट्टाकारानयनं प्रदर्शितम्। आर्यभटीयानुसारेण कक्ष्या—कुट्टाकारा-नयने तु विशेषः। अत्र सूर्यसिद्धान्तानयनमार्गेणैतदानयने यत्र यत्र सहस्रगुणनमुक्तं तत्तदिह न कर्तव्यम्। अन्या सर्वाऽपि प्रक्रिया समाना। अथ खिलविशेषानुपपन्नप्रश्न उदाह्रियते। उद्देशकः—

योष्टाभिर्नवभिष्षड्भि
दशभिश्चतुरग्रकः।
द्व्याद्यैश्चतुर्भिरेकाग्र
स्तं राशिं व्याहराञ्जसा॥ २३॥

अत्र षड्भिरष्टभिर्वा यो राशिश्चतुरग्रो भवति स कथं चतुर्भिर्द्वाभ्यां वा रूपाग्रो भवतीत्यालोच्य प्रश्नोऽयमनुपन्न इति ब्रूयात्। एवमन्येऽप्यनुपपन्नाः प्रश्ना बोद्धव्याः। अथ खिलविषय उदाह्रियते। उद्देशकः—

द्विचत्वारिंशताद्व्यग्रः
षड्विंशत्यैकशेषकः।
यो राशिस्तं द्रुतं ब्रूहि
साग्रं वेदभवान्यादि॥ २४॥

अत्र पूर्ववदागतानि प्रत्येकं रूपात्मकान्युपर्यधोभावेन निहितानि फलानि १ । शेषयोरुपरिराशिर्लोचन (२) संख्यः । अधो राशिर्वेद

१

१

१

(४) संख्यः । अत्र मतिः कल्पयितुं न शक्यते तस्मादिह भाज्य-राशिः खिल इति वक्तव्यम् । यत्र च्छेदयोरपवर्तकोऽस्ति सोऽग्रा-न्तरस्य तु नास्ति । तत्र भाज्यराशेः खिलत्वं द्रष्टव्यं । यत्रैषां त्रयाणामपि सदृशोऽपवर्तकोऽस्ति तदभावो वाऽत्राखिलत्वं द्रष्टव्यम् । एवं साग्रविषयेऽधिकाग्रादिसूत्रयुगं प्रतिपत्तॄणां बुद्धिव्यामोहो माभूदि-त्येकयैव च रीत्या व्याख्यातम् । अथैतदेवात्र किञ्चिद्विकल्प्य व्याक्रि-यते । पूर्वं "शेषपरस्परभक्तं मतिगुणमग्रान्तरे क्षिप्तमि" त्यत्रफल-पङ्क्त्यां समायां सत्यामग्रान्तरं समं कृत्वा मतिं कल्पयित्वा तथाऽ-ल्पमुपरिराशिं गुणयित्वा तच्चाग्रान्तरे क्षिप्त्वा तदधोराशिना हृत्वा लब्धं समपङ्क्तीनां फलानामधोनिहितायामतेरधस्तान्निदध्यादित्युक्तम् । इदानीं तत्र विषमायां फलपङ्क्त्यामग्रान्तर—मृणं कृत्वा मतिं परिकल्प्य तथाऽल्पमधोराशिं संगुण्य तस्मादग्रान्तरं विशोध्य तदुपरिराशिना विभज्य लब्धं विषमपङ्क्तीनां फलानां मध्ये दत्ताया मतेरधः स्थापयेदित्युच्यते । अन्यत्सर्वं पूर्ववत् । एवं कृतेऽपि पूर्वप्रदर्शित-मखिलमुदाहरणजातं प्रायशः सेत्स्यत्येव । अस्मिन् पक्षेऽ "ग्रान्तर" इत्यन्तं विभक्तिविपरिणामो द्रष्टव्यः अग्रान्तरेणेति । छन्दोवत् सूत्राणि-भवन्तीत्युक्तत्वात् । छन्दसि हि विभक्तिविपरिणामः प्रसिद्धः । क्षिप्त-मित्येतदवहीनमित्यस्योपलक्षणम् । तस्मादग्रान्तरेणोनामिति सिद्धं भवति । तथैवास्तु पाठः ॥

" ऊनाग्रभागहारं छिन्द्यादधिकाग्रभागहारेण ।
शेषपरस्परभक्तं मतिगुणमग्रान्तरेक्षिप्तम् ॥
अधउपरिगुणितमन्त्ययुगूनाग्रच्छेदभाजितेशेषम् ।
ऊनाग्रच्छेदगुणं द्विच्छेदाग्रं विहीनशेषयुतम् " ॥

इति । अस्मिन् पाठे यदा समायां फलपङ्क्त्यां मतिकल्पनेष्ट तदाग्रान्तरमृणं कृत्वा मतिं कल्पयेत् । यदा विषमायां तस्य मतिकल्पनाऽभिमता तदाऽग्रान्तरं धनं कृत्वा मतिं कल्पयेत् । एव-मधिकाग्रादिसूत्रयुगलं साग्रमधिकृत्य विस्तरेण व्याख्यातम् । अथैत-त्सूत्रयुगलस्य विषयमार्यया दर्शयति ॥

**अवशेषविषमभावे शेषस्यैकस्य शून्यतायां च ।**
**अवतरति सूत्रयुगलकमिदमन्यत्र तु निगद्यते कर्म ॥९॥**

इदं सूत्रयुगलकमवशेषविषमभावकस्य शेषस्य शून्यतायां चाव-तरति । अन्यत्र तु कर्म निगद्यते । यत्राग्रयोरुभयोर्बहूनां वाऽभाव-स्समत्वं वा तत्र कर्मोच्यत इत्यर्थः सूत्रयुगलकमित्यत्र स्वार्थे " कप् " प्रत्ययः । तदिदं कर्मार्ययाह ॥

**शेषाभावे हारावपवर्त्याम् परस्परं हृत्वा ।**
**अपवर्तकेन गुणयेच्छेषसमत्वे तु शेषमपि युञ्ज्यात् ॥१०**

इति श्रीदेवराजविरचिते कुट्टाकारशिरोमणौ साग्रपरिच्छेदः प्रथमः ॥

अस्यास्तूदाहरणमेव व्याख्यानम् । उद्देशकः—

द्व्याद्यैर्दशकपर्यन्तैर्यो राशिश्शून्यशेषकः ।
तं राशिमभिधेहि द्राक् तान्त्रिकग्रामणीर्वद ॥

अत्र द्व्यादिषु नवसु च्छेदेषु द्विसंख्याकस्यास्य त्रिसंख्यस्य द्वितीयस्य चापवर्तकाभावादनयोस्संवर्गः षट्संख्यः । अयमादितो द्वयोश्छेदयोर्निरग्रो भाज्यराशिः । अथास्य च चतुस्संख्याकस्य तृतीयस्य चापवर्तको द्विसंख्यः । अनेनापवर्तितयोः क्रमात् त्रिद्विसंख्याकयोरेतयोर्वधोऽपि षट्संख्यः । अयमपवर्तकेन द्विकेन गुणितः सूर्य (१२) संख्यः । अयमादितस्त्रयाणां निरग्रो भाज्यः । अथास्य च पञ्चसंख्यस्य चतुर्थस्यचापवर्तकाभावादनयोर्घातः षष्टिसंख्यः । अयं चतुर्णां निरग्रो भाज्यः । अथास्य च षट्संख्यस्य पञ्चमस्य चापवर्तकः षट्संख्यः । अनेनापवर्तितयोः क्रमाद्दशैकसंख्ययोरेतयोरभ्यासो दशकसंख्यः । अयमपवर्तकेन षट्केन गुणितः षष्टिसंख्यः । अयमादितः पञ्चानां छेदानां निरग्रो भाज्यराशिः । अथास्य सप्तसंख्यस्य षष्ठस्य चापवर्तकाभावादनयोर्वधो नखवेद (४२०) संख्यः । षण्णां निरग्रो भाज्यः । अथास्य चाष्टसंख्यस्य सप्तमस्याचापवर्तकश्चतुस्संख्यः । अनेनापवर्तितयोरेतयोरभ्यासो दिङ्नेत्र (२१० संख्यः । अयमपवर्तकेन चतुष्केण गुणितः खाब्धिगज (८४०) संख्यः । अयमपवर्तकेन त्रिकेण गुणितो नखतत्व (२५२०) सख्यः । अयमष्टानां हाराणां निरग्रो भाज्यराशिः । अथास्य च दशसंख्यस्य नवमस्य भागहारस्य चापवर्तको दशकसंख्यः। अनेनापवर्तितयोरेतयोरभ्यासः पक्षतत्व (२५२) संख्यः। अयमपवर्तकेन दशकेन निहतः पूर्ववन्नखतत्व (२५२) संख्यः। अयं द्विपूर्वाणां दशपर्यन्तानां नवानां भागहाराणां निरग्रः प्रत्यासन्नो भाज्यराशिः ॥

अथ शेषसाम्यविषय उद्देशकः—

द्व्याद्यैर्दशकपर्यन्तैनवभिर्भाजकैर्हृतः ।
यो भवेद्राशिरेकाग्रस्तमाचक्ष्वाऽविलम्बितम् ॥ २६

अत्र पूर्ववदानीतो नखतत्व (२५२०) संख्यो भाज्यराशिरेकेनाग्रेण युक्तः (२५२१) प्रत्यासन्नो भाज्यराशिः । ऐवमनेन न्यायेन सूर्येन्दुभौमजीवशनैश्चराणां बुधभृगुशीघ्रोच्चयोश्चन्द्रोच्चपातयोश्च द्वियुगाद्यानयनम् । उदाहरणन्तु ग्रन्थविस्तरभयान्नप्रदर्श्यते । अत्र च "पूर्वेण पूर्वेण गतेनयुक्तंस्थानंविनान्त्यंप्रवदान्तिसंख्याम् । इच्छाविकल्पैःक्रमशोभिनीयनीनेनिवृत्तिःपुनरन्यनीतिः" (बृहत्संहितायाम् अध्याये ७६. श्लो. २२ वराहमिहिरः) इत्याचार्योक्तप्रकारेणैषामेकयुगविषयाः प्रश्ना नव (९) द्वियुगविषयाः षट्त्रिंशत् (३६) त्रियुगविषयाश्चतुरशीतिः (८४) चतुर्युगविषया रसनेत्रचन्द्र (१२६) संख्याः । पञ्चयुगविषयाश्च तावन्तः (१२६) षड्युगविषयाश्चतुरशीतिः (८४) सप्तयुगविषयाः षट्त्रिंशत् (३६) अष्टयुगविषया नव (९) नवयुगविषयः प्रश्न एकः (१) एवं संभूय रुद्रबाण (५११) संख्याःप्रश्नास्संभवन्ति । अत्र रविचन्द्रभौमजीवशनैश्चराणां बुधकाव्यशीघ्रोच्चयोश्चन्द्रोच्चयातयोश्च युगैश्शून्याग्रो राशिः वसुद्व्यष्टाद्रिरूपाङ्कसप्ताद्रितिथि (१५७७९१७८२८) संख्यः । आर्यभटीये तु व्योमशून्यशराद्रीन्दुरन्ध्राद्र्यद्रिशरेन्दु (१५७७९१७५००) संख्यः । एवं साग्रकुट्टाकारो दर्शितः ॥

इत्यात्रिकुलाभरणस्य स्कन्धत्रयवेदिनः सिद्धान्तवल्लभइतिप्रसिद्धापरनाम्नः श्रीवरदराजाचार्यस्य तनयेन देवराजेन विरचितायां कुट्टाकारशिरोमणिटीकायां महालक्ष्मीमुक्तावल्यां साग्रपरिच्छेदः प्रथमः.

---

## श्रीगुरुप्रार्थना.

आबाल्यात् किल संप्रदायविधुरे वैदेशिकेऽध्वन्यहं
सम्भ्रम्याद्य विमूढधीः पुनरपि स्वाचारमार्गे रतः ।
कृत्याकृत्यविवेकशून्यहृदयस्त्वत्पादमूलं श्रये
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ १

आत्मानं यदि चेन्न वेत्सि सुकृतप्राप्ते नरत्वे सति
नूनं ते महती विनष्टिरिति हि ब्रूते श्रुतिः सत्यगीः ।
आत्मावेदनमार्गबोधविधुरः कं वा शरण्यं भजे
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ २

कामक्रोधमदादिमूढहृदयाः प्रज्ञाविहीना अपि
त्वत्पादाम्बुजसेवनेन मनुजाः संसारपाथोनिधिम् ।
तीर्त्वा यान्ति सुखेन सौख्यपदवीं ज्ञानैकसाध्यां यतः
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ३

रथ्यापङ्कगकीटवद्भ्रमवशाद्दुःखं सुखं जानतः
कान्तापत्यमुखेक्षणेन कृतिनं चात्मानमाध्यायतः ।
वैराग्यं किमुदेति शान्तमनसोऽप्याप्तुं सुदूरं ततः
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ४

भार्यायाः पतिरात्मजस्य जनको भ्रातुः समानोदरः
पित्रोरस्मि तनूद्भवः प्रियसुहृद्बन्धुः प्रभुर्वान्यथा ।
इत्येवं प्रविभाव्य मोहजलधौ मज्जामि देहात्मधीः
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ५

सत्कर्माणि किमाचरेयमथवा किं देवताराधना-
मात्मानात्मविवेचनं किमु करोम्यात्मैकसंस्थां किमु ।
इत्यालोचनसक्त एव जडधीः कालं नयामि प्रभो
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ६

किं वा स्वाश्रितपोषणाय विविधक्लेशान् सहेयानिशं
किं वा तैरभिकाङ्क्षितं प्रतिदिनं संपादयेयं धनम् ।
किं ग्रन्थान् परिशीलयेयामिति मे कालो वृथा याप्यते
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ७

संसाराम्बुधिवीचिभिर्बहुविधं संचाल्यमानस्य मे
मायाकल्पितमेव सर्वमिति धीः श्रुत्योपदिष्टा मुहुः ।
सद्युक्त्या च दृढीकृतापि बहुशो नोदेति यस्मात्प्रभो
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ८

यज्ज्ञानात् सुनिवर्तते भवसुखभ्रान्तिः सुरूढा क्षणात्
यद्ध्यानात् किल दुःखजालमखिलं दूरीभवेदञ्जसा ।
यल्लाभादपरं सुखं किमपि नो लब्धव्यमास्ते ततः
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ९

सत्यभ्रान्तिमनित्यदृश्यजगति प्रातीतिकेऽनात्मनि
त्यक्त्वा सत्यचिदात्मके निजसुखे नन्दामि नित्यं यथा ।
भूयः संसृतितापतप्तहृदयो न स्यां यथा च प्रभो
श्रीमन् लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ १०

**आर्. कृष्णस्वामी.**

## “व्याससिद्धान्तमार्ताण्डविमर्शनम्”

इह खलु निखिलजनाविदितमेतत् यत्परमकारुणिको भगवान् बादरायणो नारायणांशोऽपारसंसारसागरनिमग्नं जीवजातमुद्दिधीर्षोः परमशिवस्य आज्ञया सकलोपनिषदर्थनिर्णायकं न्यायजालं सूत्रयामास अथातोब्रह्मजिज्ञासेत्यादि यच्च व्याचख्यौ तत् परमशिवावतारभूतः श्रीशङ्कराचार्यः यथान्यायं सर्वग्राह्यमिति । कथमेतदवगम्यते? सूतसंहितादिपुराणात् । तथाहि, सूतसंहितायाम्—

“स च नारायणस्यांशो भगवान् बादरायणः” ।

इत्यारभ्य—

“सूत्रयामास वेदान्तवाक्यार्थं शङ्कराज्ञया” ।

इत्यन्तम्—

तथा मानवपुराणे “न्यायस्सूत्रात्मना प्रोक्तस्सर्वज्ञेन महात्मना ।
व्यासेनैव प्रसादेन शिवस्य परमात्मनः” ॥

तथाऽदित्यपुराणे—

“व्याकुर्वन् व्याससूत्राणि श्रुतेरर्थं यथोचिवान् ।
स एवार्थश्श्रुतेर्ग्राह्यः शङ्करस्सवितानन:” ॥

इति एवं कूर्मपुराणेऽपि—

करिष्यत्यवताराणि शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥
उपदेक्ष्यति तच्छास्त्रं यज्ज्ञानं ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि धर्माद्वैतनिदर्शनम् ॥
यत्तद्विप्रा निषेवन्ते सन्यासेनोपचारतः ।
विजित्य कालजान् दोषान् यान्ति ते परमं पदम्” ॥

इति । एवं वासिष्ठलैङ्गेऽपि—

मन्नियोगाद्धरिस्साक्षादतीवश्रद्धया सह ।
कृष्णद्वैपायनो भूत्वा ब्रह्मचारी जितेन्द्रियः ॥
वेदान्तानां प्रतिष्ठार्थं मुने सूत्रं करिष्यति ॥

इति । सूत्रजालस्य चास्य मुख्यप्रमेयबोधकशब्दघटितप्रथमसूत्रकत्वात् तादृशधर्मसूत्रयोगसूत्रयोः धर्मसूत्रत्वयोगसूत्रत्वरूपासाधारणव्यवहारवत् ब्रह्मसूत्रत्वव्यवहारः सर्वजनसम्मतः । यो हि महर्षिः यदर्थं यं प्रबन्धं कृतवान् सः तमर्थं तदादौ प्रथमत एव प्रायेण असूचयत् । यथा "अथ योगानुशासनम्" "अथ शब्दानुशासनम्" "अथातो धर्मजिज्ञासा" इति । तथा बादरायणोऽपि महर्षिः "अथातो ब्रह्मजिज्ञासे" त्येवोवाच । न तु शिवजिज्ञासा, विष्णुजिज्ञासेति वा, अतोऽवगम्यते, शैववैष्णववल्लभादीनां स्वस्वमताभिनिवेशात् अन्यथा अन्यथा अर्थप्रतिपादने नावकाश इति । अस्यां चतुर्लक्षण्यामादावन्ते मध्ये वा शिव विष्णुवाचकपदाभावत् ब्रह्मात्मपरादिशब्दानामेव तत्र तत्र उपलम्भाच्च, ब्रह्मविचारात्मकमेवेदं सूत्रजालमिति च । तत्र प्रथम-सूत्रे ब्रह्मशब्दस्य बृहिवृद्धाविति धातोर्निष्पन्नत्वेन, "अथ कस्मा-दुच्यते परं ब्रह्मेति? यस्मादुच्चार्यमाण एव बृहति, बृंहयति, तस्मादुच्यते परं ब्रह्मेति" इत्यथर्वशिरश्श्रुत्या च बृहत्त्वम् ब्रह्मपद-प्रवृत्तिनिमित्तमिति गम्यते । तच्च संकोचेप्रमाणाभावात् त्रिविधपरिच्छेद-राहित्यप्रयोजकं निरतिशयञ्च, "तद्वा एतद्ब्रह्म अद्वयं बृहत्वादि"ति-नृसिंहोत्तरतापनीयश्रुत्या, "सत्यं ज्ञानमनन्तमितिश्रुतौ, यदनन्तं तद्ब्रह्मेत्युक्तत्वेन च, तथावगमात् । एवं—

"न व्यापित्वात् देशतोऽन्तो नित्यत्वात् नाऽपि कालतः ।
न वस्तुतोऽपि सार्वात्म्यात् आनन्त्यं ब्रह्मणि त्रिधा ॥"

इत्युपबृंहणात् "अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाहेति श्रीरामानुजीयभाष्याच्च। तथा च गुणवत्वे दोषवत्वे च वस्तुपरिच्छेद-राहित्यायोगात् ब्रह्मपदं निर्गुणं निरतिशयं बृहत्वोपलक्षितं स्वरूपं प्रत्याययति। अन्यथा अन्यतमपरिच्छेदवतोऽपि घटवत् अनित्यत्वेन अनित्ये प्रपञ्चे विरक्तस्य मुमुक्षोः ब्रह्मजिज्ञासानुपपत्तिः। ब्रह्मशब्दस्य शिवविष्ण्वादिपरत्वे शैवपाञ्चरात्रचाद्यागमसिद्धार्थबोधकत्वेन ज्ञातार्थ-ज्ञापकत्वादस्य शास्त्रस्याप्रामाण्यापत्तिश्च। ये च शैवादयो निरङ्कुशं ब्रह्मशब्दं स्वस्वमतानुसारेण व्याकुर्वन्ति, स्वमतप्रतिष्ठार्थं परमतञ्च खण्डयन्ति, ते पृष्टाः व्याचक्षताम्। किं भवतां अद्वैते तात्पर्यं परमम्? उत द्वैते? नाद्यः अस्मन्मतप्रवेशेन परस्परं कलहस्य वैयर्थ्यात्। न द्वितीयः, भवद्भिः परस्परं कल्पिते द्वैते विशेषाभावात्। यदि उभयकल्पितं द्वैतम् परस्परसम्मतं तर्हि मार्गभेदः किमर्थं प्रवृत्तः? यद्यत्र मार्गभेदो नास्तीत्युच्यते तर्हि भाष्यभेदः किमर्थं प्रवृत्तः? शिवस्य विष्णोर्वा प्रधानस्य भेदादिति चेत्—मूलभूतसूत्रेषु अन्यतरबोधकस्य असाधारणपदस्य अभावात् रिक्तपात्रे दर्वीचालनवत् भवतां भाष्यकरणस्य अकिञ्चित्करत्वात्, तादृशपदसत्त्वे किं पुनः कलहायन्ते परस्परं तत्रभवन्तः? किञ्च भवन्मते शिवस्य विष्णोर्वा सर्वशब्दवाच्यताभ्युपगमेन अन्यंत्किञ्चित् ब्रह्मसूत्रात् मूलं पुरस्कृत्य भाष्यं प्रतन्यताम् किं ब्रह्मसूत्रोपमर्दनेन? शिवविष्ण्वाद्यभ्युपगन्त्रा अद्वैतिना अनभ्युपगतः कः पदार्थः भवदीयैरभ्युपगतः? येन वैष्णवेषु परस्परं कलहः शैवेषु वा आविर्भूतः। अद्वैतिना शिवविष्ण्वादीनां मिथ्यात्वमुच्यते नास्माभिरिति चेत्, तर्हि शिवस्य वा विष्णोर्वा पारम्यं कलहायमानैः परस्परं भवद्भिः कथं निर्णीयेत? उपक्रमोप-संहारादिप्रमाणजालं च शैववैष्णवमतसाधारणम्। अतः भवन्मत-

व्यवस्था मध्यस्थेन येन केन चित् कार्येति मध्यस्थः कश्चिदन्वेषणीयः। स किं मीमांसकः? अन्यो वा? नाद्यः, तस्य निरीश्वरवादित्वेन मूले कुठारापत्तेः, अन्ये किं कपिलादयः? बौद्धचार्वाकादयो वा नान्त्यः, तेषां वेदबाह्यत्वेन माध्यस्थ्यानर्हत्वात्। न द्वितीयः कपिलस्य निरीश्वरवादित्वात्। योग्यादीनां ईश्वरवादित्वेऽपि विशेषासाधकत्वात्। अतः पारिशेष्यात् अद्वैत्येव माध्यस्थ्यं वोढुमर्हति। स च अप्रसिद्ध इति चेन्न, महर्षिप्रणीतेषु योगसाङ्ख्यन्यायवैशेषिकादिशास्त्रेषु जीवब्रह्मैक्यमायावादानिर्वचनीयवादादिकं खण्डितमिति तद्वादिना येन केन चित् महर्षिणा भवितव्यं। तेषामेव परस्परं इतरमतखण्डनपूर्वकं स्वस्वमतस्थापकत्वदृष्टेः। तत्र पारिशेष्यात् व्यास एव तादृशो महर्षिः। तेन हि शैववैष्णवप्रधानं पाशुपतपाञ्चरात्रादिकं यथा खण्डितं न तथा अद्वैतमनूद्य खण्डितमिति, व्यासाभिप्रेतं मतं अद्वैतमिति सिद्धम्। तथा हि, मानवपुराणे अष्टादशाध्याये—

"अथ प्रमाणमाहात्म्यं प्रवक्ष्यामि समासतः"।

इत्युपक्रम्य—

"वेदस्य कर्मभागे तु वाक्यानां वेदवित्तमाः।
अन्योन्यं न विरोधोऽस्ति न्यायेन परिपश्यताम्॥
न्यायो जैमिनिना प्रोक्तो व्यासशिष्येण धीमता।
प्रसादादेव रुद्रस्य द्विजास्सूत्रात्मनैव तु॥
ज्ञानभागे तु वेदस्य वेदान्ताख्ये तथैव च।
वाक्यानां न विरोधोऽस्ति न्यायेन परिपश्यताम्॥
न्यायस्सूत्रात्मना प्रोक्तः सर्वज्ञेन महात्मना।
व्यासेनैव प्रसादेन शिवस्य परमात्मनः॥"

इत्युक्त्वा श्लोकद्वयानन्तरं—

"अखण्डैकरसार्थे तु वेदान्तास्सकला भृशम् ।
पर्यवस्यन्ति नान्यत्र तथा व्यासेन कीर्तितम् ॥
संसर्गार्थे द्विजा वेदाः समस्ता आस्तिकोत्तमाः ।
पर्यवस्यन्ति च यथा तथा जैमिनिनेरितम् ॥

इति प्रकरणेन व्यासेरितवेदान्तार्थः अखण्डैकरसः तन्निर्णायकसूत्रजालं व्यासकृतमपि तत्परं, संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थकत्वं उपनिषदां इति च सिद्धम् । अथ मानवपुराणं यदि प्रामाणिकं तदा व्यासमतमद्वैतम्, तदुक्तसूत्रजालमपि तत्परमिति विश्वसितुं शक्यते। तत्रैव प्रमाणं नास्तीतिचेन्न, "यद्वै किञ्च मनुरवदत्तद्भेषज" मितिश्रुतेः मनूक्तेः प्रमाणमूर्धन्यत्वात्, किञ्च "धर्मशास्त्रेषु मानवस्येव व्याकरणेषु पाणिनीयस्येव च विष्णुपुराणस्य सजातीयग्रन्थेभ्यः प्रकर्षातिशयो नापन्होतुं शक्यत" इति श्रुतप्रकाशिकाकृदुक्तेश्च । एवञ्च अद्वैतस्य श्रुतिस्मृतिव्यासकृतसूत्रप्रतिपाद्यत्वे सिद्धे सति अद्वैती व्यास एव माध्यस्थ्यं वोढुमर्हति । कथं व्यासेन मध्यस्थेन व्यवस्था कृतेतिचेत् शृणु नित्यशुद्धबुद्धमुक्तस्वभावस्य परमात्मनो मायोपाधिकस्य नामविशेषाः शिवविष्ण्वादिशब्दाः । न तु अर्थतो भेदः परस्परं तयोः—

नामानि तव गोविन्द यानि तानि ममापि च ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

इति महाभारतवचनात्, "सब्रह्म सशिवस्सहरिस्सेन्द्रस्सोक्षरः परमस्स्वराट्" "त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्वं वरुणस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः" इत्यादिश्रुतिभ्यश्च । एवञ्च आगमसिद्धशैववैष्णवमतयोः सामंजस्ये सति व्यासप्रणीते ब्रह्मसूत्रे अद्वैतिव्यतिरिक्तानां विवरणावकाशाभावः न्यायविदां सुप्रसिद्ध एव । अत्रा-

वसरे व्यासतात्पर्यं प्रकटयन्निवोदितः कश्चित् व्याससिद्धान्तमार्ताण्डः श्रियःपतिर्नारायणः परं ब्रह्म, अप्राकृतदेशविशेषे तत्सायुज्यप्राप्तिरेव मुक्तिरिति, शारीरकमीमांसाप्रणेतुः भगवतो वेदव्यासस्य सिद्धान्त इति वक्ति। अत्र पृष्टोऽयं व्याचष्टाम् नारायणशब्दस्य (२ परिच्छेदे-९ पृष्ठे) अनुशासनविरहं वदता ग्रन्थेन ब्रह्मशब्दस्य श्रीपतौ नारायणे किमनुशासनमपूर्वमुक्तम्? येन श्रियः पतिः नारायणः परं ब्रह्मेति उद्घु-ष्येत। किञ्च ब्रह्मव्यतिरिक्तायाः नित्यायाः श्रियः अभ्युपगमे विष्णोर्वस्तु-परिच्छेदापत्त्या "तद्वा एतद्ब्रह्म अद्वयं बृहत्वात्" इति नृसिंह-तापनीयश्रुत्युक्तं निरतिशयबृहत्वप्रयोज्यं अद्वितीयत्वं कथं तव नाराय-णस्य सिध्येत्? अथ अद्वितीयत्वं सजातीयद्वितीयरहितत्वं श्रीश्च विजातीयेति चेत् न, विकल्पासहत्वात्। किं साजात्यं लक्ष्मीपतित्वेन? उत जगत्कारणत्वादिना, नाद्यः लक्ष्मीपतित्वेन सजातीयस्यान्यस्य कस्य चित्सत्त्वे निषेधायोगात् असत्वे कथं अप्रसक्तं प्रतिषेधति श्रुतिः? नान्त्यः पूर्वोक्तदोषतादवस्थ्यात्। अप्राकृतदेशविशेषे माना-भावात् तथा हि "आत्मा वा इदमग्र आसीत्" "एको ह वै नारायणः" इत्यादि श्रुतिभिः प्रलयकाले कार्यस्य सूक्ष्मावस्थां प्रति-पादयिन्तीभिः "स इमान्लोकानसृजत" "सोऽकामयत" "एतस्मा-दात्मनः सर्वे लोकाः सर्वे वेदाः" इत्यादिश्रुतिभिः सर्वभूतत्व-सर्वलोकत्वाद्यवच्छेदेन ब्रह्मोपादानकत्वावगमात्। स्वोपादानकत्वस्य प्राकृ-तत्वविनाशित्वव्याप्तत्वात् ब्रह्मव्यतिरिक्तस्य अप्राकृतस्य सद्भावे प्रमाणाभावः। यानि पुराणवचनानि उपन्यस्यन्ते तृतीयपरिच्छेदे तानि सयुक्तिकप्रत्यक्षश्रुतिविरोधे विरोधाधिकरणन्यायेन अप्रमाणान्येव। सायुज्यरूपा मुक्तिः परब्रह्मसमानभोगत्वरूपमिति (द्वितीयपरिच्छेदे २१३ पृष्ठे) उक्तत्वेन मुक्तस्य लक्ष्मीपतित्वापत्तेः "परं साम्यमुपैती" ति

श्रुत्या मुक्तस्य ब्रह्मणा सादृश्यप्रतिपादनाच्च । न च तद्भिन्नमेव सादृश्यं तत्र विवक्षितमिति वाच्यं परमपदस्य वैयर्थ्यापत्तेः । मुक्तस्य ब्रह्मसाम्याभ्युपगमे " न तत्समश्चाभ्यधिकश्च दृश्यते " " न तत्समोस्ति अभ्यधिकः कुतोऽन्यः " इत्यादिश्रुतिविरोधः । मुक्तस्य भगवद्भक्तोज्झितं भक्त्यतिशयेन अभ्यवहरतः (द्वितीयपरिच्छेदे पृ.२१५) यथानुरूपां सपर्यां कुर्वतः शरीरमस्ति वा? न वा? आद्ये, सुखवत् दुखस्याप्यापत्तेः "आत्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहातिरस्ति" इति श्रुतिभ्यां । द्वितीये शरीरेन्द्रियादिशून्यस्य चर्वणनिगरणाद्यसम्भवेन भवन्मुक्तेः अपुरुषार्थत्वप्रसङ्गात् । वेदव्यासस्य सिद्धान्त इत्यपि न समीचीनम् । व्यासाभिप्रायस्य पूर्वमेव उपबृंहणादिना निर्णीतत्वात्, "स्वयं नष्टः परान्नाशयती" ति न्यायकबलिततत्वाच्च । किं च तत्पुरुषीयपुरुषान्तरीयवचनयोर्मध्ये तत्पुरुषीयवचस्य प्राबल्यमिति भवत्कल्पितन्यायेन व्यासकृतकूर्मपुराणात् तत्कृतब्रह्मसूत्रतात्पर्यं विशदं भवति तथाहि कूर्मपुराणे ईश्वरगीतायां द्वितीयाध्याये—

"यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात्स्वभावतः ।
न हि तस्य भवेन्मुक्तिः जन्मान्तरशतैरपि ॥

इत्युक्त्वा श्लोकद्वयानन्तरं—

"वदन्ति वेदविद्वांसस्साक्षिणं तमसः परं ।
भोक्तारमक्षरं शुद्धं सर्वत्र समवस्थितं ॥
तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ।
एकस्संभिद्यते शक्त्या मायया सर्वभावतः ॥
तस्मादद्वैतमेवाहुः मुनयः परमार्थतः ।

ज्ञानस्वरूपमेवाहुः जगदेतद्विचक्षणाः ।
अर्थस्वरूपमेवान्ये पश्यन्त्यज्ञाः कुदृष्टयः ॥"

इति । अत्र वेदविद्वांस इत्युक्त्या वेदव्यासस्य वेदविदग्रणीत्वात् तन्मतमद्वैतं वैदिकं च अज्ञाः कुदृष्टय इत्युक्त्या तद्विपरीतमतं अवैदिकमिति स्फुटं विमर्शकानां एवं पाराशर्ये सप्तदशाध्याये—

"द्वयोर्भेदो न चेत्तर्हि भेद एकस्य वस्तुनः ।
भेद एकस्य यः प्राप्तस्स मृषा चन्द्रभेदवत् ॥

इत्युपक्रम्य—

"मायामात्रमिदं द्वैतमद्वैतंपरमार्थतः ।
इत्याह हि परा शुद्धा श्रुतिस्सत्यार्थवादिनी ॥"

इति श्रुत्यैव श्रुतितात्पर्यस्य वर्णितत्वात् तदर्थनिर्णायकत्वेन प्रवृत्तं ब्रह्ममीमांसाशास्त्रमपि अद्वैतपरमिति सिद्धम् ॥

(अनुवर्तते)

विद्वान्. पालघाट्. नारायणशास्त्री.

## अभिनवसुभाषितावलिः

### III

अथ पुनरिदानीं तेषामेव श्रीमतां पारुपत्ते गुरुराजवर्याणां कृतिष्वन्यतमं श्रीमदम्बानवरत्नमालिकास्तोत्रद्वयं सहृदयहृदयाह्लादनाय समर्प्यते। तत्रभवन्तः पूर्वोदाहृतरसिकतावैदग्ध्यसमलंकृता आचार्यवर्याः असकृदाविष्कृताव्याजदेवताभक्तिसुधाविशुद्धान्तरङ्गाः निरतिशयानन्दमयाश्च विराजन्ते स्मेति हन्त! पुराकृतं महात्मनाम्! यद्यप्येतादृशानि स्तोत्राण्यम्बाविषयकाणि बहूनि प्रसिद्धानि सिद्धप्रोक्तानि, तथापि परमकरुणामयं पूज्यतमं वस्तु नान्यज्जनन्याः; तन्न चित्रं प्रतिनरमयमम्बास्तवो भिद्यते अथाप्यपूर्वां शोभामाधत्ते वशीकुरुते च सर्वेषां मनांसीत्यलं बहुना॥

कदाचित् साम्प्रदायिके स्थिरवासरीयदेवताभजनावसरे सवयस्याः चतुष्पथवीथिकासु पुरुषोत्तमं स्तुवन्तः मार्गे शिवायतनं प्रविष्टाः, कालमहिम्ना सर्वेष्वप्याबालवृद्धेषु भगवत्पादारविन्दभजनपरवशेषु सस्नेहप्रदीपदीपितमुखेषु "अये, गुरुराज! अम्बामधि किमपि स्तूयताम्" इति सुहृदा साट्टहासहासमुत्साहिता एते आचार्याः सहसान्तर्ज्वलितदिव्यदीपेनेव वत्सस्यानन्यशरण्यतां सम्भावयन्त्याम्बया प्रसारितेन रागेणेव रुचिरपाटलितं मुखं देवीपदकमलमभ्यावृत्य निरर्गलया वाचा इत्थमस्ताविषुरिति प्रसङ्गः॥

## (१) अम्बानवरत्नमालिका

श्रीमत्त्रिपुराम्बिकायैनमः

---

श्रितजनशिशिरापाङ्गी शिववामाङ्गी शिरीषमृदुलाङ्गी ।
सङ्गीतसरसभङ्गी मुदितकुरङ्गी करोतु मयि करुणाम् ॥ १

बालां सुरुचिरफालां मुकुरकपोलां विचित्रतरचैलाम् ।
लीलाहृताघजालां सुललितमालां नमामि शिवलोलाम् ॥ २

अम्बा सुगुणकदम्बा पुलिननितम्बा शिरोजलोलम्बा ।
बिम्बाधरा मृगाक्षी हिमरुचिबिम्बानना हि मामवतात् ॥ ३

कालीमसुरकरालीं करधृतखड्गाशुलूनरिपुमौलिम् ।
धूलीकृतदितिजालीं दुरिताद्भूलीकृते श्रितोऽस्म्यनिशम् ॥ ४

भद्रां सुजनसुभद्राममृतसमुद्रान्तरीपकृतभद्राम् ।
मुद्रां नताभयकरीं दधतीं रुद्राङ्गनामहं वन्दे ॥ ५

ललिता श्रितजनफलितामरतरुतुलिता भजत्कृपाकलिता ।
वलितापाङ्गनिपातैः कलयतु कल्याणसन्ततिं मयि ताम् ॥ ६

विद्या तटिदिव हृद्या नखरुचिविद्योतितात्मजनवेद्या ।
वेद्यागमैश्चिदाद्या सुभृशमविद्यां लुनातु ममसद्यः ॥ ७

वार्णी किसलयपार्णी पृथुलश्रोर्णी नतामरश्रेणीम् ।
वाणीजितकलवाणीं भुजगसुवेणीं नमामि शुकपाणीम् ॥ ८

मायां सुरुचिरकायां सुगुणनिकायां सुरासुरोद्गेयाम् ।
ध्येयां योगिभिरनिशं जगदभिधेयां नमामि शिवजायाम् ॥ ९

नवरत्नमालिकाख्यामेतां मार्यामुदारसविशेषाम् ।
गुरुराजसुकृतिरचितां दयया साङ्गीकरोतु निजहृदये ॥ १०

पुनरपि—अम्बानुगृहीतानन्दसुधापूरविहारादनपासिसीर्षया द्वितीयां रुचि-रतरामिमां नवरत्नमालिकां रचयामासुः ॥

## (२) अम्बानवरत्नमालिका

नित्यचिदानन्दमयीं निरुपमगुणकलितललितलावण्याम् ।
निखिलनिलिम्पवरेण्यां नित्यशरण्यां नमामि भुवनेशीम् ॥ १

पापविनाशननिरतां पावनचरितां परावरैर्विनुताम् ।
परमदयारसभरितां परशिवदयितां नमामि भुवनेशीम् ॥ २

अनुभूतिमात्रसारा मखिलोदारामपारगम्भीराम् ।
अमृतपयोधिविहारामरुणाकारां नमामि भुवनेशीम् ॥ ३

पुण्यैकसमधिगम्यां पुरुतरनिजमहिमलब्धपारम्याम् ।
पूजकसन्ततिसौम्यां पुरहरसाम्यां नमामि भुवनेशीम् ॥ ४

बन्धूककुसुमरक्तां भक्तजनोद्धरणबहुविधासक्ताम् ।
भवहृदयसानुरक्तां बहुगुणयुक्तां नमामि भुवनेशीम् ॥ ५

निगमलसत्परमार्थां निजजनततिविहितपरमपुरुषार्थाम् ।
निःश्रेयसैकसार्थां निखिलसमर्थां नमामि भुवनेशीम् ॥ ६

अमरावनैकदीक्षामसुरविपक्षामसाधुकृतशिक्षाम् ।
अध्वरधिकृतदक्षा मक्षालक्षां नमामि भुवनेशीम् ॥ ७

राजीवचपलनयनां मौक्तिकराजीव विशदशुभरदनाम् ।
राजीवविजयिवदनां राज्यनिधानां नमामि भुवनेशीम् ॥ ८

पीनोत्तुङ्गसुवृत्तस्तनयुगजितमदनकुम्भिकुम्भयुगाम् ।
शुम्भादिदम्भशमनीं शम्भुमनोज्ञां नमामि भुवनेशीम् ॥ ९

नवरत्नमालिकाख्यामेता मार्यामुदारसविशेषाम् ।
गुरुराजसुकृतिरचितां दयया साङ्गीकरोतु निजहृदये ॥ १०

---

स्तोत्रद्वयमिदं श्री गुरुराजहस्ताक्षरसत्कृतमातृकं तत्तनूजैः हेमावतीतीरविराजमान नृसिंहपुरवास्तव्यैः श्रीमद्भिरण्णय्याचार्यैः कृपयाऽस्मदायत्तीकृतमिति भूयानुपकारः चिरं स्मर्यते ॥

एच्. एल्. हरियप्प.

## धर्मजिज्ञासा.

धर्मजिज्ञासया अधर्मोऽपि जिज्ञासितो भवतीति धर्मजिज्ञासैवात्र क्रियते । धर्मस्वरूपमाधिकृत्य बहुधा विप्रतिपत्तिर्दृश्यते । सुखसाधनं धर्मः दुःखकारणमधर्मः इति न दोषारहितं लक्षणं भवितुमर्हति । अभोज्यभोजनापेयपानागम्यागमनादिष्वपि दुःखकारणेषु इष्टसाधनता बुद्ध्या जनाः प्रवर्तन्ते । अत· किं सुखसाधनमिति न निर्णेतुं शक्यते । तथा च—

" पुंसो नेष्टाभ्युपेयत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

इति मण्डनमिश्रविरचिते विधिविवेके (२४३तमपुटे) अनूदितश्लोकानुसारेण इष्टसाधनमेव क्रियासु प्रवर्तकम् । प्रवर्तनापरनामकं प्रवृत्तिकारणमेव धर्म इति अव्याप्त्यतिव्याप्त्यादि दोषरहितं लक्षणं न भवति ॥

प्रवृत्तिहेतुमधिकृत्य पाश्चात्या विद्वांसोऽपि बहुधा विप्रतिपद्यन्ते । प्रयोजनमेव प्रवतर्कमिति प्रयोजनापरनामकफलेप्सया क्रियमाणा क्रियैव धर्मः इति के चन पाश्चात्या वदन्ति । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । इति लोकोक्त्यनुसारेण प्रयोजनविरहिता क्रियैव नास्ति । किं च सप्रयोजनं कर्म धर्म इति लक्षणमपि न निर्दुष्टम् । चौर्यमपि सप्रयोजनमिति को वा चौर्यं धर्म इति वदेत् ? अनिष्टाननुबन्धि सप्रयोजनं कर्म धर्म इति अनिष्टानुबन्धिनां चौर्यादीनां कर्मणां धर्मत्व निवारणेऽपि, किमिष्टं किं वा नेष्टमिति निर्णेतुमशक्यतया धर्मस्वरूपनिर्णयो दुस्साध एव भवति । किं च देहात्मबुद्ध्या शारीरसौख्याय केवलं क्रियमाणं कर्म इह लोके अनिष्टाननुबन्ध्यपि परलोकनाशक-

मिति कदाप्यनिष्टानुबन्ध्येव यत्तु ऐहिकामुष्मिकसुखद्वयसाधकं स धर्म इत्युक्तौ तादृशसाधनं कीदृशमिति निर्णेतुमशक्यतया धर्मलक्षणं सन्दिग्धमेव भवति। एतेन सुखसाधनं धर्म इति कैश्चित्पाश्चात्यविद्वद्भिः निरुक्तं लक्षणमपि निरस्तम् ॥

अपरे के चन पाश्चात्यविद्वांसः प्रतिभाप्रेरणया क्रियमाणं कर्म धर्म इति वदन्तः प्रतिभायाः (Intuition) प्रवतर्कत्वं वदन्ति। प्रतिभावादिपक्षः श्रीमता मण्डनमिश्रेण स्वीये विधिविवेके २५२तमे पुटे विशदीकृतः। "प्रतिभानेत्रोऽहि लोकः इति कर्तव्यतासु समीहते" तदुक्तम्—

इतिकर्तव्यतायां तां न कश्चिदतिवर्तते।
प्रमाणत्वेन तां लोकस्सर्वस्समनुगच्छति ॥
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात्।
स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् ॥
जन्त्वादयः कुलायादेः करणे शिक्षिताः कथम्।
आहारप्रीतिविद्वेषप्लवनादिक्रियासु च ॥
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम्।

इति यत्कर्तव्यं तत्र प्रतिभैव प्रमाणम्। प्रतभैव प्राणिनां तृतीयं नेत्रम्। न केवलं जनाः तिर्यञ्चोऽपि प्राणिनः स्वीयां प्रतिभामेवानुसृत्य व्यवहरन्ति जीवन्ति च। वसन्तोदये पुंस्कोकिलः स्त्रीकोकिलाह्वानाय प्रतिभाबोधित एव स्वीयस्वरं विकुरुते। प्रतिभाबोधिता एव पक्षिणः काले नीडादिकं रचयन्ति। तिर्यक्षु प्रतिजातिप्रसिद्धानि आहारप्रीतिद्वेषप्लवनादिकर्माणि प्रतिभैव बोधयति। न हि श्वा मार्जालस्य शत्रुरिति प्रतिभां विना अन्यः कश्चन न बोधयति श्वमार्जालम्। एतेन प्रतिभैव प्रवर्तिका। प्रतिभाप्रेरणया प्राणिभिर्यत्क्रियते स धर्म

इति च स्पष्टं भवति। अथापि प्रतिभाया धर्मोपदेशकत्वं नाभ्युपगन्तुं शक्यते। सत्यामपि प्रतिभायां केचन जनाः कथं परदारान् जिगमिषन्ति? जागर्त्यामपि प्रतिभायां कथं कृष्णसर्पः अनपराध्यन्तमपि नरं दष्टुमिच्छति। स नतस्य जातिधर्मः। प्रतिभामप्युल्लङ्घ्य प्रणिनः क्रियासु प्रवर्तेरन्यदि तदा प्रतिभा शासितृपदवीमारोढुं नार्हति। अतः प्रतिभावादिनां पक्षे धर्माधर्मनिर्णयः दुस्साध एव। "सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय" इति शाकुन्तले काळिदासोक्तमपि प्रतिभाप्रामाण्यं क्वाचित्कमेवेति ज्ञेयम्॥

तदित्थं प्रयोजनं प्रवर्तकमिति, सुखसाधनं प्रवर्तकमिति, प्रतिभा प्रवर्तिकेति च पाश्चात्यानां त्रयः प्रसिद्धाः पक्षाः बहोः कालात् पूर्वमेव भरतखण्डवासिभिः विद्वद्भिः दूरोत्सारिता इति स्पष्टमाकल्यते॥

बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वे सति कृतिसाध्यताज्ञानं प्रवर्तकमिति तार्किकानिष्कृष्टं लक्षणमपि धर्माधर्मस्वरूपं बोधयितुं नालम्॥

महर्षिः जैमिनिस्तु—"चोदनालक्षणोऽर्थो धर्मः" इति मीमांसा सूत्रे धर्मलक्षणमाह। सूत्रमिदं शबरस्वाम्यादिभिः शास्त्रविचक्षणैः स्पष्टं व्याख्यातं वर्तते। तेषां व्याख्यानं पारिभाषिकभूयिष्ठं अनधीतशास्त्राणां दुर्बोधमिव दृश्यते। अतोऽत्र पारिभाषिकशब्दानुत्सृज्य सूत्रार्थो वर्ण्यते। एतल्लक्षणं लौकिकवैदिकोभयधर्ममपि लक्ष्यीकरोति। या च क्रिया लोके वेदे च लोडन्तैः लिङन्तैश्च धातुभिः तव्यानीयप्रत्ययान्तैश्च पदैः विहिता बोध्यते सैव चोदनेत्यभिधीयते। सैव क्रियाधर्म इत्यभिधीयते। एतादृशक्रियास्वपि या अनर्थप्रदा

सा वर्जनीया। तथा च लोके वेदे च लोडन्तैः लिङन्तैः क्त्व्या-नीयरन्तैश्च पदैः विहिता अनर्थविरहिता क्रियैव धर्मः इति लक्षणं भवति॥

वेदे यागादिक्रियाः सत्याभिवदनानृतदूरीकरणादिक्रियाश्च विहिता वर्तन्ते। लोके च "आयुष्कामः क्षीरं पिबेत्" "धनार्जन-कामः आङ्गलभाषाध्ययनं आङ्गलवस्तुवाणिज्यं वा कुर्यात्" इति वेदा-गोचराः क्रियाः सर्वजनाभ्युपगमेन विहिता ज्ञायन्ते। एतासां क्रियाणां धर्मत्वे न किमप्यपहीयते। यासां क्रियाणां अनर्थप्रापकत्वं स्पष्टं दृश्यते, यासां च धर्मत्वे जनानां विप्रतिपत्तिः वर्तते तासां सार्वजनी-नोऽभ्युपगमो नास्तीति तादृश्यः क्रियाः लोडन्तादिवदैः न बोध्यन्ते। तथाहि "आयुष्कामः क्षीरं पिबेत्" "धनार्जनकामः आङ्ग्लभाषाध्ययनं कुर्यात्" इति विहिते क्षीरपानस्य आङ्ग्लभाषाध्ययनस्य च धर्मत्वे न कोऽपीदानीं विसंवदति। आङ्ग्लजनाचारानुष्ठानं तु बहुभ्यो भरतखण्ड-जनेभ्यो न रोचते। अत स्तद्विषये 'आङ्ग्लाचाराननुतिष्ठ" इति लोडन्तेन प्रवर्तना न श्रूयते लौकिकवार्तासु। अतश्च लौकिकक्रियासु याः याः क्रियाः लोडन्तादिभिरविसंवादं बोधिताः तासां धर्मत्वमविवाद-ग्रस्तामिति ज्ञायते॥

यथा वेदे तथा लोकेऽपि कानि चित्कर्माणि नित्यानि कानि चित्काम्यानि, कानि चिच्चनैमित्तिकानि वर्तन्ते। तानि च सुज्ञेयानीति नात्र विशदीक्रियन्ते॥

तदित्थं लोके वेदे च यद्यच्चोदितमनर्थविरहितं कर्म दृश्यते तेषु नित्यमहरहः करणीयम् काम्यानि यथाकाममनुष्ठेयानि नैमित्ति-कानि च सति निमित्ते कर्तव्यानि। यथा प्लेग्रोगहेतोः जना अन्यत्र गच्छन्ति तानि च कर्माणि धर्मा एवेति जैमिनिना

महर्षिणा कृतं धर्मलक्षणम् । एतच्च लक्षणं उत्तरोत्तरोत्कर्षवादिनां पाश्चात्यविदुषामिष्टमेव । तेऽपि सर्वजनाभ्युपगतानां लोडन्तादिपद-बोध्यानां क्रियाणां धर्मत्वं बोधयन्ति । तादृशक्रियां "विश्वजनी-नाज्ञा" (Social Command) इति ते वदन्ति ।

चोदिताः क्रियाः प्रवृत्तिधर्मा इति भरतखण्डविद्वद्भिर-भिधीयन्ते । प्रवृत्तिधर्म इव निवृत्तिधर्मोऽप्यपरः मुख्यधर्मः जाग-र्तीति भरतखण्डजनानां मतम् । निवृत्तिधर्मः पाश्चात्यविदुषाम-विदितपूर्वः । विदितोऽपि स न तेभ्यो रोचते ॥

कर्मसन्यासः कर्मफलसन्यासो वा निवृत्तिधर्म इत्यभिधीयते । यः सर्वाणि विहितानि निषिद्धानि च कर्माणि सन्न्यस्य नैष्कर्म्यसिद्धौ यतमानः ब्रह्मणि रमते तस्य धर्मः कर्मसन्न्यासात्मकः निश्श्रे-यसप्रदः इत्येतेषां मतम् ।

"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।"

इति भगवद्गीतावचनेन सर्वकर्मसन्न्यासः न सुकर इत्यपरे कर्म-त्यागात्कर्मजन्यफलत्यागः वरमिति मत्वा विहितानि कर्माणि अनुतिष्ठ-न्तोऽनुष्ठीयमानकर्मणां फलानि भगवते समर्पयन्ति । भगवत्समर्पण-द्वारा जनेभ्य एव ददाति । प्रयासेनार्जितप्राज्यधनः जनः देवानिष्ट्वा धनव्ययं वा करोति, दानरूपेण वा जनेभ्यो धनं ददाति, देवा-लयादीनि वा धर्मकार्याणि कारयिष्यति । न तु आर्जनाद्विरमति । किं तु स्वार्जितं स्वभोगाय न विनियुङ्क्ते । तथा च कर्मफल-सन्न्यासः लोकसुखाय प्रभवतीति स्पष्टम् ॥

पाश्चात्यास्तु प्रवृत्तिधर्ममेकमेवाङ्गीकुर्वाणाः कर्मसन्न्यासकर्मफल-सन्न्यासान्यतरात्मकं निवृत्तिधर्मं नाभ्युपगच्छन्ति । ऐहिकानिष्टनि-वृत्तिपूर्वकाभीष्टप्राप्तिरेव प्रवर्तिकेति मन्यमानाः सैकतादपि तैलं

सञ्जिघृक्षन्ति। अतश्च तेषु साहसशीला अशेषजगदैश्वर्यं स्ववशं कृत्वा अलसानन्यान् दासीकुर्वन्ति। धनिनः दरिद्रा इति द्विधा विभक्ता जनाः तेषु परस्परं कलहायन्ते। धनहेतोः कलहायमानान्जनान् विनेतुं न शस्त्रादन्यदस्ति शरणं। पञ्चदशवत्सरेभ्यः प्राक् रष्यादेशसार्वभौमो झार्नामा चक्रकर्ता सपुत्रकळत्रः प्रजाकोपाग्नौ भस्मसात्कृतस्समासीत्। इदानीमराजकोऽयं देशः प्रजासङ्घेनैव पाल्यते। अन्येषु देशेष्वपि राज्ञो हन्तुकामास्ते प्रजाप्रकोपमुज्ज्वालयन्ति। एतादृशदुःखपरम्परायाः निवृत्तिधर्माज्ञानमेव कारणमित्यत्र न कोऽपि सन्देहः। पुरा खलु भरतखण्डे शककालात्प्राक् वत्सराणां चतुर्थे शतके अशोको नाम चक्रवर्ती बौद्धदीक्षामवलम्ब्य निवृत्तिधर्ममनुतिष्ठन् प्राज्यं राज्यकोशं प्रायच्छदिति ज्ञायते। तदा तदानीन्तनाः धनिनश्च स्वं स्वं धनं दरिद्रदैन्यदूरीकरणाय बौद्धाचार्यसङ्घाय प्रायच्छन्निति स्पष्टं श्रूयते। जैनाः बौद्धाः शैवा वैष्णवाश्च भरतखण्डवासिनो जनाः निवृत्तिधर्म एव परमो धर्म इति श्लाघन्ते। अविदितनिवृत्तिधर्माः पाश्चात्या जना धनहेतोः राज्यक्षोभं प्रजाक्षोभं चोत्पादयन्ति॥

आर्. शामशास्त्री.

# गायत्री.

"सावित्र्या ऋषिर्विश्वामित्रः। ततश्च विश्वामित्रोत्पत्तेः प्राग्गायत्र्या अदर्शनेन (ज्ञानाभावेन) उपनयनस्याभावेन द्विजा नासन्। एवंच तदा द्विजत्वशून्यैरपि वेदाध्ययनं कृत्वा तदुक्तयागानामनुष्ठानं कृतमेव यथातथेदानीमप्यस्तु। इत्याक्षेपो न समंजसः॥

"अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत्। तदृषयो भवंस्तदृषीणामृषित्वम्" इति तैत्तिरियारण्यकेन अनादितया विद्यमानानामेव तत्र प्रकाशमात्रमिति समाधेयत्वात्॥

(स्वयंभु) प्रमाणांतरमनुपजीव्य स्वयंभूतम्। स्वतःप्रमाणभूतमिति यावत्। (ब्रह्म) वेदः। तपश्चरतः (अजान्) अयोनिसम्भवान्। (पृश्नीन्) पुरुषान् प्रति। (अभ्यानर्षत्) अभिजगाम। अतस्तेषामृषित्वं बोध्यमित्यर्थः॥

अनेन चायोनिसम्भवेषु(ब्रह्मणा आदौ सृष्टेषु) अन्यतमोयं विश्वामित्रः न गाधिनन्दनो विश्वामित्र इत्यंगीकारे एव तस्य ऋषित्वमुपपद्यते नान्यथा। एवंच स एवायं विश्वामित्रः "धातायथापूर्वमकल्पयत्" इति श्रुत्युक्तरीत्या पुनः पुनः प्रतिकल्पमुत्पद्यते, कल्पान्ते च विनश्यति। तथा च पूर्वपूर्वकल्पस्थविश्वामित्रस्य ऋषित्वेनावस्थानात्सर्वदा गायत्री आसीदेवेत्युपनयनस्याविच्छेदेन प्रवृत्तिर्निराबाधैवेति दिक्॥

"य एषोंतरादित्ये" इति श्रुतिरादित्यविषयिणी, तत्सवितुरिति गायत्री तु सवितृविषयिणीति तत्र "य एषोंतरादित्ये" इति श्रुतिः प्रमाणं न भवेदिति न शंकनीयम्॥

"सविता सर्वस्य प्रसविता" इति "आदित्योपि सवि-

तोच्यते" इति निरुक्ताभ्यां सवित्रादित्ययोर्नभेद इति सिध्यति। सर्वस्रष्टृत्वं नैकस्य सामान्यस्य, महायोगिनोपि नेतीश्वरस्यैवेति वाच्य-मिति श्रुतिप्रतिपादितादित्योपि स एवेति भेदबुद्धेरसंभवात् ॥

एवं च गायत्र्या स एवोपास्य उपनतस्येति निष्कामनया (ईश्वरप्रीत्यर्थत्वेनैव) वेदाध्ययनेन तदंगाध्ययनेन तदर्थज्ञानेन संध्यादि-नित्यनैमित्तिककर्मणामनुष्ठानेन च चित्तशुद्धिं संपाद्य श्रवणादावधि-कारी स्यादित्युक्तं युक्तमेव ॥

"सावित्र्या ऋषिर्विश्वामित्रः" इत्युच्यते। एतस्या एव गायत्रीसावित्रिसरस्वतीत्येवं नामभेदः कालभेदात् ॥

तत्र ऋषिर्नाम (मन्त्रद्रष्टा विद्यमानानां मन्त्राणां द्रष्टा

"येन यदृषिणा दृष्टं, सिद्धिमाप्नोति येन वै।
मन्त्रेण तस्य तत्रोक्तमृषेर्भावस्तदात्मकम्" ॥

इति विनियोगाध्याये याज्ञवल्क्य आह। येन ऋषिणा यद्दृष्टं वेदवाक्यं, येन मंत्रेण सिद्धिम् (अभिलषितार्थसिद्धिं) प्राप्नोति च तस्य तत्रोक्त-मृषित्वमित्यर्थः ॥

गौतमीयतंत्रेऽपि—

"महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम्।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥"

इति। मनुं वेदमंत्रं वेदं वा। अत्र पाद्मे उत्तरखंडे विशेषः—

"ततोवधीत्स तं शंखं विष्णुर्वै मत्स्यरूपधृक्।
अथ तं स्वकरे कृत्वा बदरीवनमागतः ॥
तत्राहूय ऋषीन् सर्वानिदमाज्ञापयद्विभुः।

विष्णुरुवाच—

जलांतरे विशीर्णांस्तु यूयं वेदान्प्रमार्गथ।
आनयध्वं च त्वरिताः सरहस्यान् जलांतरात् ॥

तावत्प्रयोगे तिष्ठामि देवतागणसंयुतः ।

नरदउवाच—

ततस्तैः सर्वमुनिभिस्तपोबलसमन्वितैः ।
उद्धारिताः षडंगास्ते वेदा यज्ञसमन्विताः ॥
तेषु यावन्मितं येन लब्धं तावन्मितस्य हि ।
स स एव ऋषिर्जातस्तदाप्रभृति पार्थिव ॥
अथ सर्वेऽपि संगम्य प्रयागं मुनयो ययुः ।
लब्ध्वा वेदान् सयज्ञांस्तु ब्रह्मा हर्षसमन्वितः ॥
अयजच्चाश्वमेधेन देवर्षिगणसंवृतः ।

इति । संध्यावंदनादौ क्रियमाणानां मार्जनार्घ्यदानजपाद्यानामारंभे च चित्तशुद्धिसंपादनाय (चित्तं तत्र कर्मणि यथा एकाग्रं स्यात्तथा अंतः करणादिगतमलनिरासाय) प्राणायामः विहितः शास्त्रेषूपनिषदादिषु च । तत्रेदं ज्ञातव्यं भवति—तत्र गायत्र्या ब्रह्मोपासकानामयम्—

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामत्रयं कृत्वा प्राणायामैस्त्रिभिस्त्रिभिः ।
अहोरात्रकृतात्पापान्मुच्यते नात्र संशयः ॥
सर्वपापहरः प्रोक्तः प्राणायामो द्विजन्मनाम् ।
तस्मादभ्यधिकं नास्ति तपः परमपावनम् ॥" इत्युक्तः ।

स च प्राणायामः नक्तन्दिवं भक्ष्यभोज्याद्याहारसेवनेन दुष्टादुष्टजलसेवनेन नानावातसेवनेन नानाव्यवहारेण च शरीरेषु तथांतःकरणे स्वाभाविकशुद्धिविरुद्धस्थितिसंपादकानां वस्तूनां निरासाच्छरीरं संशोध्य तद्द्वारांतःकरणं च शोधयित्वा येनयेनरूपेण यानि यानि कर्माण्यनुष्ठेयानि तेन तेन रूपेण तेषां तेषामनुष्ठाने समर्थः सन्नुद्दिष्टार्थसाधनाय प्रभवति ॥

प्राणायामेन वातपित्तश्लेष्मादिदोषाणां नाशो भवति। धारणया पापानां नाशो भवति। प्रत्याहारेणेन्द्रियाणां वशीकरणाद्विषयसंसर्गो न भवति। ध्यानेन शोकमोहदंभक्रोधमात्सर्याद्यभिमाना नश्यन्ति (दह्यन्ते इति यावत्)। ततो मनः (चित्तं) शुद्धम् (एकाग्रं) सत ब्रह्मोपासनायां सर्वथासक्तं भवति। तदुक्तं कपिलेन—

"प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान्।
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान्॥
यदा मनः स्वं विरजं योगेन सुसमाहितम्।
मूर्तिं भगवतो ध्यायेत्स्वनासाग्रावलोकनः॥" इति।
तथा—"ब्रह्मादयोपि त्रिदशाः पवनाभ्यासतत्पराः।
अभूवन्नन्तकभयात्तस्मात्पवनमभ्यसेत्॥
यावद्बद्धो मरुद्देहे यावच्चित्तं निराकुलम्।
यावद्दृष्टिर्भ्रुवोर्मध्ये तावत् कालभयं कुतः॥" इतिच।

एवं च सर्वथा पूर्णायुर्मध्येप्राप्तकालभयानिवारकस्य परमपावनतपोरूपस्य अष्टमं वय आरभ्य अभ्यसनीयतां प्राप्तस्य सर्वेष्टसिद्धिप्रापकस्य सर्वानिष्टनिवारकस्य लोकानुग्रहसाधनस्य प्राणायामस्यात्यन्तावश्यकत्वेप्युपनयनादारभ्य ब्रह्मचारिणस्तथा गृहस्थस्य सन्यासिनश्च प्रायः अभ्युदयनिश्श्रेयससाधिकां तां प्रक्रियामन्यांश्चात्यंतावश्यकान्यमनियमांश्च सर्वथा दूरीकृत्य उपनयनविवाहादिप्रक्रियानुकरणमात्रमुपनेत्रादय उपनितादिभिः कारयन्ति कुर्वन्ति च। तेनोपनीताः गृहस्था विवाहितास्त्रियश्चेत्येवं सर्वेपि कलुषान्तःकरणतयो ऐहिकामुष्मिकशुभफलप्रापककर्मपर्याचनाशक्ता स्वस्वकर्तव्यकार्यसामान्ये विमुखाः स्वेच्छाचारविहारा नास्तिका एव भूत्वा स्वधर्मत्यागेन दुराचारेण च सर्वं भरतखण्डं व्याकुलयन्त्यविच्छेदेन दुःखान्यनुभवन्ति च। तस्मादत्र सर्वैरपि शक्तैर्नानारूपेण यत्नानास्थाय यथावद्वर्णाश्रमधर्मपूर्णं यथा भरतखण्डं स्यात्तथा रक्षणीयं न तत्रौदासीन्यमाश्रयितव्यमित्यलं पल्लवितेन॥

**काशी. शेषवेङ्कटाचलशास्त्री.**

# कुवलयानन्दपाठसंशोधनम्.

II

१. एवं च 'मालिन्यमब्जशशिनोर्मधुलिट्कलङ्का' विति श्लोके सुन्दरीं प्रति कस्यचिद्रसिकस्योक्तिरियमिति व्याचक्षाणानां विचक्षणानां भाषितं वरदराजस्तवानालोकनमूलकमिति सुश्लिष्टम् ॥

कुवलयानन्दोदाहृतानि—

(१) 'उद्घाट्य योगकलया हृदयाब्जकोशम्'

(२) 'मोहं जगत्त्रयभुवामपनेतुमेतत्'

(३) 'भानुर्निशासु भवदङ्घ्रिमयूखशोभाः'

(४) 'नाथ त्वदंघ्रिनखधावनतोयलग्नाः'

(५) 'नामैव ते वरद वांछितदातृभावं'

(६) 'आश्रित्य नूनममृतद्युतयः पदं ते'

(७) 'त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा'

(८) 'मालिन्यमब्जशशिनोः'

(९) 'तापत्रयौषधपरस्य तव स्मितस्य'

एतानि कुवलयानन्दस्थानि नव पद्यानि वरदराजस्तवीयानि । तत्र उद्घाट्ययोगेति पद्ये अनेकेषु दीक्षितग्रन्थेषूपलब्धमपि वरदराजस्तवे दीक्षितैरेव स्वयं सम्यग्व्याख्यतम् । तादृशं व्याख्यानं व्युत्पित्सु-व्युत्पन्नजनोपयोग्यमवश्यं दर्शनीयमित्यभिप्रेमः ॥

अत्र श्लोके श्लिष्टमुकुन्दपदस्य नवनिध्यन्यतमवाचकत्वेन तत्पर-तया चन्द्रिकाकारादिभिरप्रदर्शितमपि रसिकसञ्जीविनीकारेण संगृहीतं वर्तते । चेदपि वरदराजस्तवव्याख्यानावलोकनेन यावानानन्दसन्दोह-

स्समुन्मिषति तावदानन्दलेशोऽपि रसिकसञ्जीविन्यवलोकनेन नोपलभ्येत। अस्मिंश्च श्लोके दीक्षिताः शब्दशक्तिमूलकमुपमालङ्कारध्वनिं, विरोधाभासं, श्लेषं, व्यतिरेकालङ्कारं च तत्तल्लक्षणसंगमनपूर्वकं सम्यग्विवव्रुः, वाच्यार्थप्रदर्शनप्रकारः पण्डितप्रकाण्डैः प्रकामं निफालयितव्यः। अस्मिन्नेव श्लोके—'धन्यैश्चिरादपी' त्यत्र धन्यं—धननिमित्तः संयोगः तद्वद्भिः 'गोद्व्यचोसङ्ख्यापरिमाणाश्वादेर्यत्' इति पाणिनिसूत्रेण धनस्य निमित्तं संयोगः इत्यर्थे यत्प्रत्यये कृते तत अर्शआदित्वादच्प्रत्ययं स्वीकृत्य पूर्वोक्तार्थं केनाप्यनुन्मीलितपूर्वं प्रकाश्यकार्षुः॥

विषमालङ्कारप्रकरणे उदाहृते 'त्वद्वक्त्रसाम्यमयमम्बुजकोशेत्यादिश्लोके श्लेषमूलातिशयोक्तिविषमप्रतीपनिदर्शनाभेदान् व्याख्यानान्तरानुपलब्धान् निरूपयामासुः।' 'आश्रित्य नूनममृतद्युतय' इतिश्लोके वेदान्तशास्त्रसंमतोऽर्थः कुवलयानन्द एव स्वयं विवव्रुः। अतः वरदराजस्तवाख्योऽयं ग्रन्थः कुवलयानन्दस्याध्यापकैरध्येतृभिश्चादरादवश्यं सम्यग्विमर्शनीय। इति तद्ग्रन्थपरीशीलयितॄणां स्पष्टम्। 'नामैव ते वरद वाञ्छितदातृभावं' इतिश्लोके उत्तरार्धे 'न ह्यागमोदितरसः श्रुतिसिद्धमर्थं लिङ्गेन बोद्धमुरारी कुरुते विपश्चित्' इति वरदराजस्तवे अन्यथा वर्तते। दीक्षितैरेवास्मिन्पद्ये प्रकृतलोकोक्त्यलङ्कारलक्ष्यानुगुण्येन 'विश्वप्रसिद्धतरविप्रकुलप्रसूतेर्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यं' इति द्राविडभाषागाथानुकारि (नाङ्ग अरंञ्जिन ब्रह्मणनक् पूणल्एन्तक्) लक्ष्यं अन्यथा विपरिणमितमिति भाति। एवं च वरदराजस्तवतद्व्याख्यानयोः सम्यक्परिशीलनेन कुवलयानन्दपाठस्योपकारो भूयान् भवतीत्यत्र न विचिकित्सा॥

२. एवं 'अभिलषसि यदीन्दो वक्त्रलक्ष्मीं मृगाक्ष्या' इतिविषमालङ्कारलक्ष्यत्वेनोदाहृते श्लोके, 'सुविमलमथ बिम्बं पारिजातप्रसूनैः

निवेशितः, दार्ष्टान्तिकः 'मदुक्तिश्चेदन्तरिति' वाक्यार्थः उत्तरार्धे कथितः। इत्थं प्रसङ्गसङ्गत्या विद्वज्जनमात्रग्राह्यत्वेन धन्यतां उत्तर-श्लोकद्वयेन प्रकटय्य अन्ते स्वमाहात्म्यं—

'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-
द्यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥'

इत्यनेन प्रफुल्लयामास। दीक्षितास्तु कविसम्प्रदायानुरोधात् दार्ष्टान्तिकं पूर्वं, दृष्टान्तवाक्यार्थं पाश्चात्यं प्रदर्शयामासुः। कुवलयानन्देऽस्मिन् नैषधीयत्वेन प्रत्यभिज्ञातुमशक्याः बहवः श्लोकाः॥

'विवस्वता नायिषतेव मिश्राः'
(नै. २२ स, ३५ श्लो.)

'अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः सङ्ख्यया'
(नै. १२ स, १०३ श्लो.)

'बलात्कुरुत पापानि'
(नै. १७ स, ४९ श्लो.)

एवमादयस्तत्र तत्र प्रकरणे समुपलभ्यन्ते॥ अधिकं परस्तात्॥

**क. गोपालकृष्णशास्त्री.**

## अभिप्रायमयूखः.

### IV.

### प्राचीनार्य संस्कृतौ अनार्यनास्संक्रमः.

आर्याः देशान्तरादारादायाताः भारतवर्षं समाक्रम्य तत्र विद्यमानान् अनाघ्रातनागरकतागन्धान् दस्यूनपसार्य स्वयं सिन्धुनदप्रान्ते राज्यं चक्रिर इति नवीनानां सिद्धान्तः । आर्यानार्याणां परस्परमसंपर्कमभिपद्यन्ते नवीनाः । एवं सति परन्तु भारतराजकीयप्राक्तनविमर्शशाखाधिकारिणः सुगृहीतनामानो रामप्रसादचन्दा स्वीये 'Survival of the Pre His.oric civilisation of the Indus Valley' इति ग्रन्थे आर्याचारे अनार्यसंवासवशाल्लब्धावकाशाः केचन सिन्धुनदप्रान्तीयाचाराः अद्यावधि प्रतिष्ठिता उपलभ्यन्त इति मतमुद्धाव्य एतदवसरे अनेका युक्तीः प्रदर्शयामासुः । एष विचारः विचक्षणानां पर्यालोचनसह इति किं चिदिव तन्यते ॥

### 1. आर्यो दासश्च.

आर्यदासयोः यस्संग्राम्योभूत् स न वर्णितः ऋग्वेदे । ऋग्वेदनिरूपित कालकलया तु आर्यदासयोः कलहकोलाहलश्शान्त एवासीत् । परं आर्येष्वेव स्वव्यूहकलहो दर्यदृश्यत । यथा हि सुदासः अनेकर्षिपरिष्कृतपार्श्वं राजदशकं प्रति युयुधे । वासिष्ठा भार्गवाश्च पक्षप्रतिपक्षभावमङ्गचकार्षुः । अनिन्द्रः, अयज्यः, अनृतदेवः इत्यादिपदानि पूर्वं दस्यून् प्रति प्रयुक्तान्यपि कालक्रमेण आर्येष्वेव अरिपक्षवर्तिनमपि जनं परामम्रुशुरिति विज्ञायते । महर्षिरपि वसिष्ठः अनृतदेव इत्याभिशप्तो दृश्यते । स यातुधान इति शङ्कास्पदमपि बभूव (ऋ ७.१०४. १४–१५) ॥

राजदशकं विजित्य राजासुदासः राजसूयेन इजे । एतस्मिन् बहूत्विजे यागे सुदासः विश्वामित्रं मुख्यपदत्वेन वव्रे । राज-

पुरोधा वसिष्ठश्चुक्रोध । ततो वसिष्ठतनयश्शक्तिनामा अभिचारिक-मन्त्रान् प्रयुज्य विश्वामित्रं विमतिं चकार । अत्रान्तरे जामदग्न्यः ससर्परीबलात् विश्वामित्रस्यामतिमपनीय त प्रतिनिवृत्तप्राणं चक्रुः । अन्ते विश्वामित्रपक्षपातिनः सौदासाश्शक्तिं निजघ्नुः ॥

एवं ऋग्वेदनिरूपिते काले दासा (दस्यवः) विधूतविद्वेषा ऊरीकृतार्यसख्याश्च बभूवुः । दासवर्णसंपृक्तायां जनतायां कारणान्तरात्संभूतस्संग्रामस्तत्रतत्रोपवर्णितः ऋग्वेदे इति वक्तुं शक्यते ॥

## 2. राजा तत्पुरोधाश्च.

पुरा भारतवर्षे राजानः कुलपुरोधसमेकं वव्रुः । राज्ये राजकार्यं पुरोहितकार्यमिति कार्यविभागः अभूत् । इति वृत्रदृष्ट्या एष विभाग एव विलक्षणः । आर्याणां प्रथमावासात् भारतेतरदेशान् प्रति गतास्वार्यशाखास्वदृष्टचरः एषकार्यविभागः । तथाहि ईजिप्ट् बाबिलोनियादि देशेषु राजैव राष्ट्रपुरोधाश्च भूत्वा यज्ञादीन्समपद्यत । रोम् ग्रीस् इत्यादिदेशेष्वपि राज-पुरोहितः एव (राजा चासौ पुरोहितश्च) राज्यमकरोत् ।

पारसीकदेशे तु मगी (Magi) इति पुरोहितकुलं भारतेयब्राह्मणकुलप्रतिमानं बभूव । आदौ मगिकुलमतिपरिमितमेवाभूत् । पारसीका राजकीये अधिकारे उच्चभावमापन्नाः देवयजनादिषु मागिनां साहाय्यमपेक्षन्तेस्म । एवं क्रमशः मगिकुलमभ्यवर्धत । मागिनः ग्रामस्यैकस्मिन् भागे उषित्वा मगिवर्ण इति वर्णान्तरमेव प्रावर्तयन् । सर्वस्यास्य कारणं मार्गणीयम् । पारसीका राजानः यतः अपरिचितकर्मकलापं परधर्मं उत स्वविस्मृतमपि अन्यैः कैश्चन श्रद्धालुभिस्संरक्ष्यमाणं कंचन पुरातनं धर्ममवलंबिरे तत एव मगिनां प्राधान्यं समजायत । भारतवर्षेऽप्यनयैव कथया भवितव्यमिति रामप्रसाद चन्दा उहन्ते । आर्यागमनकाले सिन्धुनदप्रान्ते ये राजनः अवर्तन्त ते

अपरिचितमपि ऋषि (आर्य) मतमेवावलंबिरे । भारतवर्षे ब्राह्मणानां वैभवस्य आदिमेष्टकान्यासः एवं विरचितः । ब्राह्मणोक्तरीत्या राजन्यो न यष्टुमर्हति । यदि वा राजन्यो यजेत तदा कथमपि ब्राह्मणो भूत्वैव इज्यात् । यथा विश्वामित्रः ब्रह्मर्षिर्भूत्वा सञ्जयाख्यं चतूरात्रमपश्यत् । राज्यंचाविन्दत (पञ्चविंशब्राह्मणे XXI—12.2) । देवापिरार्ष्टिषेणः कुरुकुलप्रसूतः तपसा ब्राह्मणत्वं संपाद्य (महाभारते IX-39,35) भ्रातुः शन्तनोरार्त्विज्यमकरोत् (ऋग्वेदे X-98) । परन्तु विश्वामित्रादीनां क्षत्रियकुलोत्पन्नत्वे मूलभूते ऋग्वेदे नास्ति प्रमाणाम् । एतादृशकथाः क्षत्रियानार्त्विज्यादिकरणान्निवारयितु मुपकल्पिता अर्वाचीनैरिति भाति ॥

3. पुरुषमेधः.

आदौ सिन्धुनदप्रान्तियाः राजानः स्वमतं पौरोहित्याधीकारं च किं निमित्तं विदुधुविरे? किमर्थं परधर्ममङ्गचकुर्वन्? तेषां मनसि निजदेवतापेक्षाया ऋषिदेवताः बलीयस्य इति, निजकर्मापेक्षया ऋषिदृष्टं कर्म फलसंपादने पटीय इति च प्रत्ययेन जातेन भवितव्यम् । लोके परधर्माश्रयणं च प्रायेण विलुप्तमहिम्नयामेव जनतायां संदृश्यते । प्रायस्तदानीं देशीयप्रजाः प्रभवश्च स्वधर्मे विश्लथश्रद्धा बभूवुः ॥

पूर्वोक्त आर्यक्षत्रियवर्णभेदः उभयोर्मनोभूमिकाभेदमूलक एव । उभयोर्मनोभूमिकाऽभिद्यत इत्यत्र किङ्गमकम्? । उच्यते—केचनाचाराः ब्राह्मणानां इतरेषांच अधर्मा इति प्रत्यादिष्टा अपि क्षत्रियैर्धर्मत्वेन समाद्रियन्त । यथा पुरुषमेधः । वैदिकपुरुषमेधे पशुस्थानीयः पुरुषो न हन्यते । तत्परितः अग्निर्नीयते । अनन्तरं पशुर्मुच्यते । अन्यः अवैदिकोऽपि पुरुषमेधो विद्यते । अश्वमेधवदेषः । अस्मिन् पुरुषः निहन्यते । पुरुषमारणानन्तरं महिषी शवपार्श्वे स्वपेत् ।

अत्र महिषीनिर्देशात् एष पुरुषमेधो राजन्यस्यैवेतिक्तव्यम् । राजा सोमकः एकतनयस्य जन्तोः स्थाने सुतशतं प्राप्तुमिच्छन् पुरुषमेधमकरोत् । सोमकः सुतशतं प्राप्य अन्ते पुण्यलोकमवाप । तत्पुरोधास्तु नरकं प्राविशत् । तं नरकान्मोचयितुं सोमकेन संचालितः यत्नः निष्फलः एवाभूत् । अत्र पुरुषमेधः ब्राह्मणस्य नरकफलदोऽपि क्षत्रियस्य पुण्यलोकसंपादक इति स्पष्टम् । तदुक्तं ब्रह्मनन्दीयशाक्तानन्दतरंगिण्यां— "नरबलिस्तु राज्ञामेव—राजानरबलिंदद्यान्नान्योऽपि परमेश्वरी" इति ॥

एवं वेदपुराणतन्त्रादिषु परामृष्टेषु इदं वक्तुं शक्यते—यत् पुरुषमेधः पूर्वं धर्म इति ब्राह्मणैराचरितः पश्चादधर्म इति परित्यक्तः । एवंसतीतरे वर्णाः मुख्यतः क्षत्रिया तमेव धर्मबुद्ध्या आचरितवन्तः । एक एव आचारः ब्राह्मणानां धर्मः क्षत्रियाणामधर्म इत्येतत् ब्रह्मक्षत्रयोः मनोभूमिकाभेदं सुस्पष्टं व्यनक्ति ॥

## 4. अनुमरणम्.

भर्तृमरणे सत्या अनुमरणमपि पूर्वोक्तमेव मनोभेदं प्रकाशयति । ऋगाथर्वणवेदनिरूपिते कालेऽपि अनुमरणं न परमार्थतः किन्तु अनुशयनरूपेण केवलमाचारितामिति दृश्यते । स्त्री भर्तृशरीरसमीपे चित्यां शिश्ये । तदा (ऋग्वेदे X. 18,8) पुनरुत्थापिता सती दिधिषुं प्रति पुनरुपयमार्थं प्रेषिता बभूव । गौतमानुमता देवरेण सुतोत्पत्तिरपि स्त्रियाः अनुमरणाभावमेवानुबोधयति । मासषट्कपर्यन्तं वसिष्ठः, एकवत्सरपर्यन्तं बोधायनः, यावज्जीवं मनुः विधवायाः ब्रह्मचर्यमनुशास्ति । विष्णुबृहस्पत्यादयः केचन स्मृतिकाराः अनुमरणमैच्छिकमाहुः । पराशरस्तु अनुमरणं ब्रह्मचर्यतश्श्रेय इति श्लाघते । पैठीनसिः, अंगिराः, व्याघ्रपादश्च ब्राह्मणविधवायाः अनुमरणं प्रतिषिध्य तद्ब्राह्मणेतरस्त्रीणां

धर्म इत्यभिप्रयान्ति । एवं च काश्चन स्मृतयः अनुमरणानुमोदिकाः, काश्चनानुमरणनिरोधिकाः ॥

अनुमरणानुमोदकानिरोधकशास्त्रयोः परस्परं विरोधः कुशलमतिना माधवेन एवं पर्यहारि—निरोधकशास्त्रेण स्त्रियाश्चित्यन्तरे दहनं निरुद्धं, न तु दहनमात्रम् । अस्मिन् मते आधारभूता श्रुतिर्न विद्यते ॥

इतिहासे काश्चन क्षत्रियस्त्रियः सकृत् अनुगमन माचेरुः । यथा पाण्डुपत्नी माद्री, वसुदेवसत्यश्चतस्रः देवकी, रोहिणी, भद्रा मदिरेति ॥

क्रिस्तीय वर्षाणां सप्तमे शतके बाणः स्वीयकादंबर्यां अनुगमनं व्यर्थमित्याकलयतिस्म । नवमे शतके मेधातिथिरपि अनुमरणं नानुमेने । एकादशशतके विज्ञानेश्वरः, त्रयोदशशतके माधवश्च अनुमरणं तुष्टाव । दशमशतकपर्यन्तं ब्राह्मणा अननुमतानुमरणाः क्षत्रियाश्चाभिमतानुमरणाः एवासन् । विज्ञानेश्वरकालात् अनुमरणानुमोदस्तु जातिसांकर्यनागरकतासांकर्यभयजन्यः ॥

### 5. यतिनो व्रात्याश्च.

वर्षचतुष्टयात् प्राक् पञ्चापदेशे मोहेन्जोदारो इति प्रदेशे भूगर्भे एकं पत्तनं भूशोधकैः आविष्यकारि । तत्रोपलब्धानि घटापटाभरणादिपदार्थजातानि प्रायः वर्षाणां चतुः सहस्रात् प्राक् कृतानीति विमर्शकाभिप्रायः । तत्र अर्धनिमीलितनयनाः नासान्तन्यस्तदृष्टयः केचन शिलामयविग्रहा उपलब्धाः । ते प्राक्तनयतिप्रतिकृतय इत्यूह्यते । यतिनः ऋग्वेदे (viii—3, 9) भृगुप्रस्कण्वप्रतिमाना महीयान्ते । तैत्तिरीयसंहितायां (ii—4-9-2) पंचविंशब्राह्मणे (viii—1,4) च त एव इंद्रक्रोधमुत्पाद्य तेनेन्द्रेण शालावृकेभ्य उपहारीकृता विनाबालकत्रितयं इत्युक्तम् । इन्द्राभिपूजकाः भृगुप्रस्कण्वप्रतिमानाः यतिनः कथमिंद्रशत्रवोऽ-

भवन् इति विमर्शनीयम् । अत्र कारणमूह्यते । पूर्वं यतिनः सिन्धुनद-प्रान्तीयराजानां पुरोहिता अभवन् । यज्ञादिसंपादितसुरप्रसादानां चमत्कारिपुराणसंपदानां लसत्कवितारसानां आर्याणां सिन्धुनदप्रान्तीय-राजानुग्रहे जाते, यतीनां आर्याणां च परस्परं स्पर्धा संजाता । यतिनः विमानीकृताः । व्रात्या इति निन्दिताश्च । ते व्रात्याः सामान्यैः अनार्यकर्मसु पौरोहित्येन वृता आसन् । पुनः यदा ब्रह्मज्ञानाय ब्राह्मणाः अयतन्त तदा ध्यानयोगादिपारंगता अनार्ययतिनः पुनर्लब्धप्रतिष्ठा अभवन् ॥

योगः न ब्राह्मणेषु किन्तु वर्णान्तरेषु प्रारेभे इत्यत्र भगवद्गीता—(IV—1,2) प्रमाणम् । योगः आदौ विवस्वते प्रोक्तः, तेन मनवे, तेन इक्ष्वाकवे । इत्येवं परंपरा ॥

### 6. अश्वत्थपूजा.

मोहेन्जादारो इतिस्थले उत्कीर्णाश्वत्थवृक्षाकृतिः अङ्गुलीयकमुद्रा काचनालभि । इयं च बौद्धमतस्मारकसामग्रीमध्ये गृहीता । बौद्धमते ब्राह्मणमतेऽपि अश्वत्थपूजा दृश्यते । एषा पूजा प्राक्तनानार्यमत-सम्बन्धिनीति ज्ञायते—विपश्चितः प्रमाणम् ॥

इत्येवं चतुरमुपन्यस्तं रामप्रसादचन्दैः । तैरुक्तं सर्वमपि अङ्गी-क्रियत इति न वक्तुं शक्यते । पूर्वोक्तैः प्रमाणैः केचनाचाराः अनार्येषु आसन्नित्युच्यताम् । ते त्वार्येषु नासन्नित्यत्र प्रस्फुटं प्रमाणमपक्ष्यते ॥

योगनरसिंह्माचार्यः.

॥ श्रीः ॥

ग्रन्थावलोकनम्—

श्रीगीतास्वामिविजयः, नवभक्तिरसायनं च.

पुस्तकमूल्यं अष्टौ कलाः. प्राप्तिस्थानम्, के. आर्. सुब्रह्मण्यशास्त्री,
श्रीगीतास्वामि मठः. हनुमान् घाट्. बनारस् सिटि.

इदं च पुस्तकद्वयं श्रीकाशीनिवासिभिः श्रीगीतास्वमिचरण-कमलाराधकैः श्रीकृष्णशास्त्रिभिः विरचितम्; श्रीगीतास्वामिविजयश्च श्रीस्वामिनां चारित्ररूपः सरळैः पद्यैस्संग्रथितः ॥

भक्तिप्रधानश्च नवभक्तिरसायनाख्यो ग्रन्थः। अत्र च श्रावणादि-रूपेण भक्तेर्नवधा विभागः विभक्तानां लक्षणानि, श्रवणादीनामन्त-रङ्गबहिरङ्गभावश्च, उपास्तीनां परस्परं भेदः, उपास्तिभेदेन तासां फल-तारतम्यं च, व्रीह्याद्युत्पत्तौ तत्तद्बीजगतानां सामर्थ्यानामेव असा-धारणकारणत्वम्, पर्जन्यस्य च साधारणकारणत्वं यथा, तद्वत् प्राणिकर्मणामेव सुखाद्यनुभवे असाधारणकारणत्वं ईश्वरस्तु साधार-णकारणम्, भक्तेश्च वर्णाश्रमाद्यनपेक्षत्वात् सर्वसुकरताचेत्येतत् सर्वं सरळतमैः मधुरैः पद्यैः वर्णितम्, लौकिकैर्दृष्टान्तैश्चोपष्टम्भितम्, अनायासेनावगन्तुं शक्यते। अन्यत्र दुरूहान् विषयान् बाला अप्यत्र सुखेनाऽवजानन्तीत्यत्र नास्ति सन्देहलेशोऽपि ॥

भक्तिविषये इतः पूर्वं एतादृशो ग्रन्थः नोपालभ्यत इत्यपि वक्तुं शक्यते। सर्वेऽप्यास्तिकशिखामणयः ग्रन्थं चेमं पठित्वा अनुसन्धाय चात्रस्थान् विषयान् भगवति निविष्टस्वान्ताः श्रियः पतेः कृपाकटाक्ष-पात्रतामीयुरित्याशास्महे ॥

विद्वान् रा. नारायणस्वामिदीक्षितः.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

## सम्पादकीयसमितिः

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः बि. ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकलेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्याया

६. महामहोपाध्याया विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्तप्रधानोपा-ध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल् हरियप्पार्याः, एं.ए, महापाठशालोपाध्यायाः

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टसुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः. तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्.

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

# स म्पा द की य स मि तिः

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः बि. ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकलेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्याया

६. महामहोपाध्याया विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्तप्रधानोपा-ध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल् हरियप्पार्याः, एं.ए, महापाठशालोपाध्यायाः

## विज्ञप्तिः

भो भो महाशयाः! सहृदयाः! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः. तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

> यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
> परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
> न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
> दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः, एम्.ए.,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## स म्पा द की य स मि तिः

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः बि. ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचर्याः, एं.ए., मैसूरु महाराजाकलेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः महाविद्वांसः ब्र. श्री. काशी शेषवेंकटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र. श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्याया

६. महामहोपाध्याया विद्यानिधयः धर्माधिकारिणः ब्र. श्री. विरूपाक्षशास्त्रिणः महापाठशालायामद्वैतवेदान्तप्रधानोपा-ध्यायाः

७. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला साहित्यप्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

९. श्रीमन्तः एच्.एल्.हरियप्पार्याः, एं.ए, महापाठशालोपाध्यायाः

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः. तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्.

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु

श्रीः

# बोधायनामावास्यानिर्णयः

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिं ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥
यत्कृपालेशसंपातादुदेति ज्ञानभास्करः ।
रामस्य तत्पदद्वंद्वं नौमि जाड्यनिवृत्तये ॥

स्मृतिमुक्ताफले । दर्शश्राद्धकालः । पार्वणत्वात्तस्य कर्मकालत्वमपराह्णस्य । कुतपस्य प्रारम्भकात्वमित्येतदाब्दिकानिर्णये प्रपञ्चितं । तथा सत्यपराण्हस्य मुख्यकर्मकालत्वात्पूर्वेद्युरेव वाऽपरेद्युरेव वाऽपराण्हव्यापिन्यमावास्या गृहीतव्या । पूर्वेद्युरेवापराण्हव्याप्तौ जाबालिः—

पूर्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि ।
भूतविद्धैव सा ग्राह्या पितृकार्येषु सर्वदा ॥

इति । प्रतिपदि पूर्वाह्णे भवेच्चेदपराण्हे यदि न भवेदित्यर्थः ॥
तथा—

प्रदिपद्यमावास्या पूर्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा ॥ इति ।

हारीतोपि—

यस्यां संध्यागतस्सोमो मृणाळ इव दृश्यते ।
अपराण्हे तदा तस्यां पिण्डानां करणं ध्रुवं ॥ इति ।

याज्ञवल्क्यः—

यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः । इति

यत्तु कार्ष्णाजिनिनोक्तं—

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा ।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥

इत्यादिभिः भूतविद्धाप्राशस्त्यभूतविद्धानिषेधप्रतिपादकवचनानां परस्पर-विरोधेन दर्शस्यापराण्हव्याप्तेः कर्मकालत्वाच्च मुख्यत्वेन. अपराह्ण-व्यापिनी मुख्येति निबन्धनकारैर्निर्णीयते ॥

तुल्यबलविरोधे विकल्प इतिगौतमसूत्रोक्तन्यायेन भूतविद्धा-प्राशस्त्यबोधकवचनानां बोधायनकात्यायनपरत्वं, भूतविद्धानिषेधबोधक-वचनानामापस्तम्बादिविषयकत्वं च निर्णीयते ।

तथा च हारीतः—

अपराह्णः पितॄणां तु या पराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वास्तानुयायिनी ॥

अस्तमयकालव्यापिनी पूर्वा न ग्राह्येत्यर्थः उभयत्रापराह्णव्यापित्वं द्वेधा भिद्यते । एकदेशेन कात्स्न्र्येन चेति । एकदेशव्याप्तिश्च द्वेधा भिद्यते । वैषम्येण साम्येन चेति । तत्र वैषम्येणैकदेशव्याप्तौ महत्त्वेन निर्णयः ।

अपराण्हद्वयव्यापिन्यमावास्या यदा भवेत् ।
तत्राल्पत्वमहत्वाभ्यां निर्णयः पितृकर्मणि ॥

इतिस्मरणान्महत्येव ग्राह्येत्यभिप्रायः । तथा च शिवराघवसंवादे— अल्पापराह्णे त्याज्यामा ग्राह्या स्यादधिका भवेदिति । सामान्येनोभयत्रैक देशव्याप्तिस्तत्तिथिगतैर्वृद्धिक्षयसाम्यैस्त्रिधा भिद्यते । अत्रखर्वादिशास्त्रेण-निर्णयः । शिवराघवसंवादे स एवार्थो दर्शितः ॥

अमावास्या तु या हि स्यादपराण्हद्वये समा ।
क्षये पूर्वाऽपरावृद्धौ साम्येऽपि च परा स्मृता ॥ इति ।

स्मृत्यन्तरेऽपि—

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।

साम्येपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥ इति ।

चतुर्दशीमिश्रा सिनीवाली प्रतिपन्मिश्रा कुहूः । तथा च व्यासः—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कूहूर्मता । इति ।

नारदोपि—

अपराण्हद्वयव्यापिन्यमावास्या यदा भवेत् ।
क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये तथेत्तरा ॥ इति ।

कार्त्स्न्येनोभयत्रापराह्णव्याप्तावपि तिथिवृद्धौ कुहूरेव ग्राह्या । इत्यादिभिरपराण्हव्याप्तेर्मुख्यता । दिनद्वयेऽपराण्हे समव्याप्तौ तिथिक्षये पूर्वा तिथिवृद्धौ साम्ये वा परतिथेः ग्राह्यता च प्रतिपादिता भवति । अत्र पूर्वोक्तापराण्हव्याप्तेः प्राशस्त्यप्रतिपादकवचनानि बोधायनकात्यायनभिन्नपराणीति कैश्चिदुच्यते । तस्योपोद्बलकवचनं यथा । लोगाक्षिः—

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्माणि ।
स्त्रीशूद्रैश्च कुहूर्ज्ञेया तथा चानग्निकैर्द्विजैः ॥ इति ।

एतद्वचनं परदिने अपराण्हव्याप्त्याधिक्याभावे तिथिक्षये च । प्रतिपदि चन्द्रदर्शने वा बोधायनीयानां सिनीवालीग्रहणं बोधयति । न तु कुहूग्रहणं निषेधति कदाचित् कुहूग्रहणस्य बोधायनस्याप्यभिमत्वात् । तथा हि बोधायनः—

मध्यान्हात्परतो यत्र चतुर्दश्यनुवर्तते ।
सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला ॥ इति ।

बृहस्पतिरपि—

मध्यान्हाद्यात्वमावस्या परस्तात्संप्रवर्तते ।
भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥ इति ।

अत्र मध्यान्हादूर्ध्वमपराण्हमतिक्रम्य परस्तादमावास्या प्रवर्तत इति व्याख्येयम् । तदेतद्वचनद्वयं अपरेद्युरेवाऽपराण्हव्याप्तौ योजनीयं ।

तथा च हारीतः—

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुनपकालिकी ॥

इत्यादिभिरपराण्हव्याप्तेर्मुख्यत्वं । बोधायनादिभिरप्यङ्गीकृतम । सर्वमेन त्संगृहीतं कालनिर्णये—

श्राद्धेऽपराण्हकालीनो दर्श आब्दिकवन्मतः ।
दिनद्वयेप्येकदेशवृत्तौ ग्राह्यो महत्त्वतः ॥
तुल्यत्वं चेदेकदेशे क्षये पूर्वोन्यथोत्तरः ।
कृत्स्नव्याप्तौ द्वयोरन्होरुत्तरस्तिथिवृद्धितः ॥

दैवज्ञविलासे—

भूतेषु त्रिंशद्घटिका अमावास्या तु क्षीणतः ।
प्रतिपच्चन्द्रदर्शे तु हव्यं कव्यं चतुर्दशी ॥ १ ॥
चतुर्दश्यां चतुर्यामे चतुस्त्रिघटिका यदि ।
अमा च विद्यते तत्र श्राद्धं वाजसनेयिनां ॥२ ॥
भास्करास्तमयात्पूर्वं द्वितीया संप्रवर्तते ।
दर्शश्राद्धं भूतदिने कुर्याद्वाजसनेयिनां ॥ ३ ॥

बोधायनस्मृतौ—

यथा चतुर्दशी यामतुरीयमनुपूरयेत् ।
अमावास्या ह्रीयमाणा तदैव श्राद्धमाचरेत् ॥

इत्यादिना तिथिह्रासे प्रतिपदि चन्द्रदर्शने वा सिनीवाली ग्राह्या तिथिवृद्धौ प्रतिपादि चन्द्रदर्शनाभावे च कुहूरेव ग्राह्या बोधायनादिभिरिति [illegible]नवाक्यादेवावगम्यते । तिथिक्षये तु भूतविद्धैव ग्राह्या सिनीवाली प्राशस्त्यात् बोधायनस्य । चतुर्दश्यां चन्द्रदर्शनसम्भवात् ॥

चन्द्रक्षयकालश्चोक्तः कात्यायनेन—

साम्येपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥ इति ।

चतुर्दशीमिश्रा सिनीवाली प्रतिपन्मिश्रा कुहूः । तथा च व्यासः—

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कूहूर्मता । इति ।

नारदोपि—

अपराण्हद्वयव्यापिन्यमावास्या यदा भवेत् ।

क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये तथेत्तरा ॥ इति ।

कात्स्न्येनोभयत्रापराह्णव्याप्तावपि तिथिवृद्धौ कुहूरेव ग्राह्या । इत्यादिभिरपराण्हव्याप्तेर्मुख्यता । दिनद्वयेऽपराण्हे समव्याप्तौ तिथिक्षये पूर्वा तिथिवृद्धौ साम्ये वा परतिथेः ग्राह्यता च प्रतिपादिता भवति । अत्र पूर्वोक्तापराण्हव्याप्तेः प्राशस्त्यप्रतिपादकवचनानि बोधायनकात्यायनभिन्नपराणीति कैश्चिदुच्यते । तस्योपोद्बलकवचनं यथा । लोगाक्षिः—

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्माणि ।

स्त्रीशूद्रैश्च कुहूर्ज्ञेया तथा चानग्निकैर्द्विजैः ॥ इति ।

एतद्वचनं परदिने अपराण्हव्याप्त्याधिक्याभावे तिथिक्षये च । प्रतिपदि चन्द्रदर्शने वा बोधायनीयानां सिनीवालीग्रहणं बोधयति । न तु कुहूग्रहणं निषेधति कदाचित् कुहूग्रहणस्य बोधायनस्याप्यभिमत्वात् । तथा हि बोधायनः—

मध्यान्हात्परतो यत्र चतुर्दश्यनुवर्तते ।

सिनीवाली तु सा ज्ञेया पितृकार्ये तु निष्फला ॥ इति ।

बृहस्पतिरपि—

मध्यान्हाद्यात्वमावस्या परस्तात्संप्रवर्तते ।

भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत् ॥ इति ।

अत्र मध्यान्हादूर्ध्वमपराण्हमतिक्रम्य परस्तादमावास्या प्रवर्तत इति व्याख्येयम् । तदेतद्वचनद्वयं अपरेद्युरेवाऽपराण्हव्याप्तौ योजनीयं ।

तथा च हारीतः—

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी ॥

इत्यादिभिरपराण्हव्याप्तेर्मुख्यत्वं । बोधायनादिभिरप्यङ्गीकृतम । सर्वमेत त्संगृहीतं कालनिर्णये—

श्राद्धेऽपराण्हकालीनो दर्श आब्दिकवन्मतः ।
दिनद्वयेप्येकदेशवृत्तौ ग्राह्यो महत्त्वतः ॥
तुल्यत्वं चेदेकदेशे क्षये पूर्वोन्यथोत्तरः ।
कृत्स्नव्याप्तौ द्वयोरन्होरुत्तरस्तिथिवृद्धितः ॥

दैवज्ञविलासे—

भूतेषु त्रिंशद्धटिका अमावास्या तु क्षीणतः ।
प्रतिपच्चन्द्रदर्शे तु हव्यं कव्यं चतुर्दशी ॥ १ ॥
चतुर्दश्यां चतुर्यामे चतुस्त्रिघटिका यदि ।
अमा च विद्यते तत्र श्राद्धं वाजसनेयिनां ॥२ ॥
भास्करास्तमयात्पूर्वं द्वितीया संप्रवर्तते ।
दर्शश्राद्धं भूतदिने कुर्याद्वाजसनेयिनां ॥ ३ ॥

बोधायनस्मृतौ—

यथा चतुर्दशी यामतुरीयमनुपूरयेत् ।
अमावास्या ह्रीयमाणा तदैव श्राद्धमाचरेत् ॥

इत्यादिना तिथिह्रासे प्रतिपदि चन्द्रदर्शने वा सिनीवाली ग्राह्या तिथिवृद्धौ प्रतिपदि चन्द्रदर्शनाभावे च कुहूरेव ग्राह्या बोधायनादिभिरिति बोधायनवाक्यादेवावगम्यते । तिथिक्षये तु भूतविद्धैव ग्राह्या सिनीवाली प्राशस्त्यात् बोधायनस्य । चतुर्दश्यां चन्द्रदर्शनसम्भवात् ॥

चन्द्रक्षयकालश्चोक्तः कात्यायनेन—

अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे तु पुनः किल भवेदणुः ॥ इति ।

चतुर्दश्यष्टमांशकालपर्यंतं चन्द्रस्य दर्शनीयत्वसिद्ध्या—
पिंडान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥ इति ।

अत्रनातिसन्ध्यासमीपत इति सायंकालस्य निषेधादपराण्हः कर्मकाल इति निर्णये व्याख्यातम् । अनेन तिथिक्षयवशात् परेन्हि दर्शस्यापराण्हव्याप्त्यभावे पूर्वेद्युरप्यपराण्हमतिक्रम्य दर्शप्राप्तौ नातिसन्ध्यासमीपत इतिवचनबलाच्चतुर्दश्या अपराण्हे दर्शश्राद्धं कुर्यादित्युक्तं भवति। न तु परेद्युः कार्त्स्न्येनापराण्हव्याप्तावपि पूर्वेद्युरपराण्हव्याप्त्यभावेऽपि सिनीवालीप्राशस्त्यात्पूर्वेद्युरेव कर्तव्यत्वनियमः । यत्तु उत्तरमासि शुक्लपञ्चम्या अर्वाक्तिथिक्षयसम्भवे चतुर्दश्यामपराण्ह एव दर्शश्राद्धं कर्तव्यमिति सांप्रदायिका वदन्ति । तथा कुत्रापि वचनासम्भवाच्छंकनीयम् । तथा वचनसत्वेपि—नववृद्धिर्दशक्षय इति दृग्गणितपक्षे नवघटिकावृद्धिर्दशघटिकाक्षयपक्षमाश्रित्य उक्तं भवतीति मन्तव्यं । बाणवृद्धीरसः क्षय इति पक्षे तु शुक्लप्रतिपदि चन्द्रदर्शनासम्भवे पञ्चम्याअर्वाक्तिथिक्षयः न सम्भवति । (त्रयोविंशद्घटिकाधिकाहःप्रमाणयुक्तदेशेषु सम्भवकदाचित्) । अतः प्रतिपदि चन्द्रदर्शनाभावे दर्शस्यापराण्हे कार्त्स्न्येन व्याप्तौ तद्विहाय अपराण्हे दर्शव्याप्त्यभवचतुर्दशीग्रहणं न युक्तं । अत्र अमावास्याष्टमांशे तु पुनः किल भवेदणुरिति कात्यायनवचनस्य—अमावास्याष्टमांशे-चन्द्रः अणुरूपो भवतीत्यर्थं परिकल्प्य दर्शप्रतिपत्सन्धिदिने चन्द्रदर्शनमाशङ्क्य चतुर्दश्यामेव दर्शश्राद्धं केचन कुर्वन्ति तदसङ्गतं ज्योतिश्शास्त्रविरोधात् । तथा च सूर्यसिद्धान्ते—

उदयास्तविधिः प्राग्वत्कर्तव्यश्शीतगोरपि ।
भागैर्द्वादशभिः पश्चाद्दृश्यः प्राग्यात्यदृश्यतां ॥

कामदोग्ध्रीव्याख्या—शीतगोश्चन्द्रस्यापि उदयास्तविधिः उदयविधिरस्तविधिश्च प्राग्वत् । पूर्वोक्तप्रकारेण कर्तव्यः । द्वादशभिर्भागैः रविचन्द्रान्तरकालांशैर्द्वादशभिः पश्चाद्दृश्यो भवेत् । तैरेवद्वादशभिः प्रागदृश्यतां याति । द्वादशभागैरवितोन्यूनोचन्द्रस्यास्तमयः । सच कृष्णचतुर्दश्यन्ते । रवेर्द्वादशभागैरधिकधिषण्यश्चन्द्रस्योदयः । पश्चादुदयः । स च शुक्लप्रतिपदन्ते । तथा च वृद्धवसिष्ठः—

असितचतुर्दश्यन्ते प्रतिमासं चास्तमेति तुहिनकरः ।
सततं दर्शस्यान्ते तुलितोराश्यादिभिर्नियतं ॥
विमलः प्रतिपद्यन्तेऽप्युदयं याति प्रभाकरान्मुक्तः ।
द्वादशभागविवृद्ध्या तिथयश्चन्द्राश्च संभूताः ॥ इति ।

किञ्च ज्योतिस्सिद्धान्तसंग्रहे—

उदयास्तक्रमः प्राग्वत्कार्यश्चन्द्रमसस्तथा ।
अंशैर्द्वादशभिःपश्चाद्दृश्यः प्राग्यात्यदृश्यतां ॥

इत्यादिभिः कृष्णचतुर्दश्यन्ते चन्द्रस्यादृश्यत्वं दर्शान्ते राश्यादिभिस्सूर्यसमत्वाद्गाढास्तत्वम् । प्रतिपदन्ते पश्चिमदिशि दृश्यत्वं च प्रतिपादितम् । तथेदानीमपि प्रत्यक्षसिद्धं वर्तते । एवं सति दर्शस्यान्ते चन्द्रस्याणुरूपत्वकथनं सर्वथाप्यनुपपन्नं यथा सा दृष्टेंदुस्सिनीवाली सा नष्टेंदुकला कुहूः उदये चतुर्दशीयोगाद्दृष्टचन्द्रा सिनीवाली । उदये अमायोगान्नष्टचन्द्रकला कुहूरिति । प्रतिपत्पर्वसान्धिदिनस्य नष्टेंदुकलात्वप्रतिपादनवैयर्थ्यञ्च । अतः अमावास्याष्टमांशे तु पुनःकिल भवेदणुरिति निर्णयसिन्धुस्थितकात्यायनवचनार्थस्यासमञ्जसत्वात् । पुन किल भवेदणुरिति पाठः प्रामादिक एव । अत एव वैद्यनाथदीक्षितैरिदं वचनं प्रकारान्तरेण

पठितम् । तद्यथा अमावास्याष्टमांशे च पुनः कीलो भवेदणुरिति । अस्यार्थः—चतुर्दश्यष्टमांशे चन्द्रः क्षीणो भवति । किञ्च अमावास्याष्टमांशे पुनः—अष्टमांशे तु—अणुः गाढास्तत्वेन कलाहैन्यादणुकल्पः अदृश्यस्सन् इत्यर्थः । कीलो भवेत् । सूर्येण सह संलग्नो भवेदित्यभिप्रायः । अयमेव पाठसाधुः । अन्यथा प्रतिपत्पर्वसन्धौ पुनः चन्द्रस्याणुरूपत्वांगीकारे सन्धिदिने बोधायनीयैर्दर्शश्राद्धं कदापि न कर्तव्यमित्युक्तं भवति । अयमभिप्रायश्शिष्टाचारविरुद्धश्च । यथा चतुर्दशीघटिकाः ३४ दर्शघटिकाः ३५ प्रतिपत् ३७ द्वितीया ४० एवंस्थितिसमये सर्वैरपि सन्धिदिने दर्शश्राद्धमनुष्ठीयते । तदा बोधायनसूत्रावलंबिनामन्येषां च समानं भवति दर्शश्राद्धं—तस्मात्सिद्धान्तशास्त्रस्य सूर्यांशपुरुषद्वाराभिव्यक्तसौरोपनिषत्वाद्भ्रमप्रमादादिदोषशून्यसौरोपनिषदनुरोधेनैव कात्यायनऋषिवाक्यस्य तात्पर्यं कल्पनीयम् । एवं च दर्शस्य दिनद्वये अपराह्णे कात्स्न्र्येन व्याप्तावपि तिथिवृद्ध्या परैव । एकदेशेन समव्याप्तौ तिथिवृद्धौ परा । तिथिक्षये पूर्वा । प्रतिपदि सूर्यास्तात्पूर्वं द्वितीयातिथिप्राप्तौ तस्मिन् दिने चन्द्रदर्शनं भवति । प्रतिपादि चन्द्रदर्शने भूतविद्धोपि दर्शो बोधायनीयैर्ग्राह्यः । प्रतिपादि चन्द्रदर्शनाभावे तिथिवृद्धौ अपराह्णव्यापिनि दर्श एव । दर्शश्राद्धानुष्ठानं बोधायनीयानामपि युक्तमिति स्मृतिकर्तॄणां निबन्धनकाराणामभिप्राय इति विरम्यते । स्वालित्यादिदोषः क्षन्तव्य इत्यभ्यर्थयते ॥

सिद्धान्ती तम्मय्यशास्त्री.

## अथ निरग्रपरिच्छेदो द्वितीयः

अथ निरग्रपरिच्छेदो व्याख्यायते । तत्रादौ निरग्रविषयं प्रश्न-मार्यया प्रकटयति—

हारकभाज्यक्षेपैरुद्दिष्टैर्गुणफले य आख्याति ।
स निरग्रविदां श्रेष्ठो दैवज्ञानां महीतले भवति ॥ १ ॥

य उद्दिष्टैर्भागहारकभाज्यक्षेपैर्गुणफले आख्याति, स महीतले निरग्रविद्-दैवज्ञानं मध्ये श्रेष्ठो भवति । तत्रेदं प्रश्नशरीरम् । उद्दिष्टोऽयं भाज्यराशिः केन गुणकारेण गुणितः, उद्दिष्टेनानेन सङ्ख्यान्तरेण वियुक्तः संयुक्तो वोऽद्दिष्टेनानेन भागहारेण विभक्तः शुद्ध्येत्तादृशः को वाऽत्र गुणकारः, किं वा फलमिति । एतच्चोऽत्तरत्रोदाहरणेन व्यक्तीभविष्यति अथ तत्प्रश्नभङ्गायाऽर्यामाह—

कुट्टकसूत्रद्वितयं संयोज्य निरग्रकुट्टपद्धत्याम् ।
तत्रत्यैः कर्मचयैर्विद्वान्विदधीत गुणकफले ॥ २ ॥

अत्र विद्वच्छब्देन तान्त्रिक उच्यते । कुट्टकसूत्रद्वितयं पूर्वलिखितं कुट्टाकारयुग्मविषयमार्यभटीयस्थमाधिकाग्राद्यार्यासूत्रयुगलंनि रग्रकुट्टपद्धत्त्य-निरग्रकुट्टाकारमार्गे संयोज्य सम्यग्योजयित्वा तत्रत्यैः निरग्रकुट्टाकारां गणितसंबन्धिभिः कर्मचयैः कर्मसमूहैः गुणकफले गुणकश्च फलं च गुणकफले तेऽत्र विदधीत कुर्यात् । अत्र यद्यपि सर्वं सूत्रद्वयं नोपयुज्यते तथाऽपि प्राचुर्यात्तदनादृत्य कुट्टकसूत्रद्वितयमित्युक्तमित्यव गन्तव्यम् । अथाऽधिकाग्रादिसूत्रे प्रस्तुतप्रश्नभङ्गार्थं निरग्रमधिकृत्य व्याक्रियते । आधिकाग्रभागहारम्—अत्राग्रशब्देन सङ्ख्याऽभिधीयते । भागहारशब्देन चाऽत्र भागहारभाज्यराश्योः परस्परं भाजकत्वात्त द्वावपि गृह्येते । अत्र ग्रहैकत्ववदेकत्वमविक्षतम् । अतोऽयमर्थः

सम्पन्नः। अधिकसङ्ख्याकौ हरभाज्यराशी इति। ऊनाग्रभागहारेण छिन्द्यात्। अत्राप्यग्रशब्दः सङ्ख्यावाचकः। ऊनसङ्ख्येन भागहारेण विभजेत्। अपवर्तकेन सम्भवे सत्यपवर्तयेदित्यर्थः। अथायमपवर्तको ज्ञायते। तदाऽनयनमन्यत्रोक्तम्—

"विभजेत हरविभाज्यौ परस्परं यावदेति संशुद्धिम्।
एकस्थयोस्तदपरश्छेदो हरभाज्ययोर्भवति॥" इति।

अत्र छेदशब्दोऽपवर्तकपर्यायः। इह येनाऽपवर्तकेन हरभाज्यावपवर्त्येते, तेन ऋणात्मकस्य वा धनात्मकस्य वा क्षेपस्यापवर्तनमप्यर्थसिद्ध-मिति कण्ठोक्तम्। यत्र हरभाज्ययोरपवर्तनमप्यास्ति क्षेपस्य तु तन्नास्ति तदुदाहरणं खिलं विद्यात्। उक्तं च—

"भाज्यहरप्रक्षेपान्सदृशच्छेदेन संम्भवे छिन्द्यात्।
स तु चेद्विभाज्यहरयोश्छेदो न क्षेपकस्य च खिलं तत्॥"

इति। एवमुदाहरणस्यादौ सम्यगखिलत्वं विज्ञायाऽपवर्तनस्य सम्भवे सति हरभाज्यक्षेपानपवर्तयेत्। अत्रेदमनुसंधेयम्। अपवर्तनेऽप्यनप-वर्तनेपि भाजकादूनेऽधिकेऽप्यविशेषेण सर्वदा भाज्यराशेरधो भाजक-राशिं विन्यसेदिति। शेषपरस्परभक्तं मतिगुणमित्येतद्द्वयमपि भाज्ये भागहारादूने सति पूर्ववत्। अधिके तु विषमायां फलपङ्क्तौ सत्यामस्य मतिः कल्प्या। अत्रापि मतिकल्पनायामेवमालापः। अयमुपरिराशिः केन गुणित उद्दिष्टेन सङ्ख्याविशेषेण युक्तौ वियुक्तो वा अनेन स्वाधोराशिना शुद्ध्यतीऽत्यग्रान्तरे क्षिप्रम्। अत्राप्यग्रशब्दः सङ्ख्या-वचनः। अन्तरशब्दो विशेषवचनः विवरवचनः। अत्र मतिगुणितं प्रकरणं तदुद्दिष्टे धनात्मके रूपात्मके सङ्ख्याविशेषे क्षिप्तं कार्यम्। एतदुपलक्षणं, तदृणक्षेपेण शोध्यमित्यस्य। अध उपरि गुणितम-न्त्ययुगितिवल्ल्युपसंहारः पूर्ववत्। ऊनाग्रच्छेदभाजिते शेषम्। अत्रा-

प्यग्रशब्देन सङ्ख्योऽच्यते । छेदशब्देन पूर्ववद्धरभाज्यौ च विधीयेते । शेषस्य चैकत्वमविवक्षितम् । सम्भवे सत्यूनसंख्याभ्यामपवर्तिताभ्यां हर भाज्याभ्यां क्रमादुपर्यधोराश्योर्विभक्तयोः शेषे कुट्टाकारफले भवतः । अन्विष्यमाणः प्रत्यासन्नो गुणकारस्तत्र फलं च लब्धं भवतीत्यर्थः । अत्र भज्ये भागहारादधिके सति त्वपवर्तिताभ्यां हरभाज्याभ्यां क्रमादधउपरिराश्योर्विभक्तयोः शेषे गुणफले भवतः । अधिकाग्र-च्छेदगुणमित्याद्यत्र नोऽपयुज्यते । अत्राऽयं संग्रहश्लोकः—

कुट्टाकारे निरग्रे समधिकवपुषि छेदतो भाज्यराशौ
लब्धे युग्मे मतिः स्यादुपरि फलमधोवर्धकस्याद्विहीने ॥
युग्मे लब्धे मतिः स्यादुपरि तु गुणकोऽधः फलंस्याद्दृढेन
च्छेदेनाप्ते गुणेस्मिन् गुणक इह फले भाज्यभक्ते फलं स्यात् ॥७॥

इति । अस्यार्थः—

निरग्रकुट्टाकारे भाज्यराशौ भागहारादधिके सति तत्र शेषपरस्पर-भक्तमिति लब्धानां फलानां पङ्क्तौ विषमायां सत्यां मतिः कल्प्या । तदा तत्र वल्ल्युपसंहारे कृतेऽधोराशिर्गुणकः । उपरिराशिः फलम् । अथ भाज्ये छेदादूने सति तत्र फलपङ्क्त्यां समायां मतिः कल्प्या । तदोऽपरिराशिर्गुणः अधोराशिः फलम् । अत्रोऽभयत्र सति सम्भवे गुणेपवर्तितेन भाज्येन विभक्ते शेषं फलं भवतीति । इदं सर्व-मुदादरणेन व्यक्तीभविष्यति । अत्रेदमनुसन्धेयम् । भाज्ये भाग-हारादूनेधिके च यत्र शेषपरस्परभक्तमित्यत्र फलपङ्क्तिरेका भवति, तदा शेषयोश्चैकः शुद्ध्यति । भाज्ये भागहारादूने सत्येव शेषपर-स्परभक्तमित्यत्र फलपङ्क्ती द्वे भवतः, तदा शेषयोरप्येकः शुद्ध्यति । तत्रोऽभयत्राऽदावेव प्रत्यासन्नां मतिं कृत्वा तया भाज्यं गुणयित्वा स्वाधःस्थेन छेदेन विभजेत् । लब्धं फलं भवति । मतिरेव गुणः ।

पूर्णार्थमार्गणैः शुद्धाः
शीघ्रं गुणफले वद ॥ इति ॥ १२ ॥

अत्रोक्तवदानीतो गुणो वेदाग्निसङ्ख्यः । फलं प्रकृतिसङ्ख्यम् । अथानयोः क्रमादिष्टगुणापवर्तितौ हरभाज्यौ दत्वा गुणफलशतमानयेत् । अथ भाज्ये भाजकादधिके तत्राप्यनपवर्तनविषय उदाह्रियते ।

उद्देशकः—

द्विखाग्नयो हताः केन
रूपयुक्ता हरेन्दुभिः ।
भक्ताः शुद्धा गुणफले
ब्रूहि तूर्णं निरग्रवित् ॥ इति ॥ १३ ॥

अत्रोक्तप्रक्रिययाऽनीतो गुणो रामवेदसङ्ख्यः । फलं मुनिरुद्रसङ्ख्यम् । अथैतयोः क्रमादिष्टगुणौ हरभाज्यौ क्षिप्त्वा गुणफलशतमानयेत् । अथात्र क्षेपमृणं परिकल्प्योदाह्रियते ।

उद्देशकः—

द्विखाग्नयो हताः केन
रूपहीना हरेन्दुभिः ।
भक्ताः शुद्धा गुणफले
ब्रूहि तूर्णं निरग्रवित् ॥ इति ॥ १४ ॥

अत्रागतो गुणो गजतर्कसङ्ख्यः फलं शरधृतिसङ्ख्यम् । अथानयोः क्रमादिष्टगुणौ हरभाज्यौ क्षिप्त्वा गुणफलसहस्रमानयेत् । अथात्राऽपवर्तनविषय उदाह्रियते ।

(अनुवर्तते)

करूरुशेषाचार्यः

# अधर्ममोटनम्[1]

---

कान्ताक्रान्तिविलक्षणा त्रिनयना मत्तेभचर्मावृता
तारानाथकृतास्पदा परिवृता व्यालैर्विभूत्यञ्चिता ।
लग्ना पृष्ठतले जरद्वृषपतेर्भूतैस्समास्कन्दिता
साऽस्मान्पातु जगत्त्रयैकजननी कस्यापि दिव्या तनुः ॥ १ ॥

(नान्द्यन्ते सूत्रधारः)

सूत्रधारः—(समन्तादवलोक्य सहर्षं) आः! फलितोऽस्मासु महादेव-प्रसादः । यद्गैर्वाण्या वाण्यापि विरचितं रूपकं विलोकयितुमियान् जनसंमर्दः । अलं विलम्बेन । न युक्तं प्रतिपालयत्सु महाजनेषु वृथा कालयापनं यावत्प्रियवयस्यं तानपट्टं शब्दापयामि ॥

(नैपथ्याभिमुखं विलोक्य)

भाव! भाव! इतस्तावत् । (प्रविश्य पारिपार्श्वकः)

पारि.— अयमागतोस्मि ।

सूत्र.—भाव! राजाधिराजस्य कृष्णभूपतेर्जन्मोत्सवमाचरितुमागतास्सर्वेऽपि पण्डिप्रकाण्डाः । तन्नारायणाख्येन छात्रेण विरचितं अधर्ममोटनं नामप्रहसनमभिनीय तोषयितुमिच्छामि । तत्सहायीभवितुमर्हति भावः ।

---

[1] महापाठशालाछात्रेण नारायणाख्येन विरचितमिदं प्रहसनं श्रीकृष्णसार्वभौमस्य जन्मोत्सवसमारम्भे (7–6–30) तमे दिवसे महापाठशालायां छात्रैरभिनीतं अमन्दमानन्दमजनयत्प्रेक्षकाणामित्यवधेयम्. (सं.)

पारि.—अनुगृहीतोस्म्यनेन प्रणयेन । तथापि वयस्य नीचपात्रप्रायेण प्रहसनेन कथं पण्डितास्तुष्यन्तीति महान्मे संशयो जातः ।

सूत्र.—भाव नात्र सन्देहावकाशः पश्य—

**आनन्दकाले महतां मनोऽपि**
**क्षुद्रेषु हास्येषु न मोदते न ।**
**यथा रसज्ञा मधुरैः पदार्थैः**
**सन्तोषिता वाञ्छति चिञ्चिकान्नं ॥ २ ॥**

पारिपार्श्वकः—एवमेतत् (सूत्रधारमुखं निपुणं विलोक्य सहासं) वयस्य कुतस्त्वं लम्बश्मश्रुर्भूत्वापि न मुण्डितः । अप्याचिराद्द्रक्ष्यसि पुत्रोत्सवं ।

सूत्र.—कुतो मे तादृशं सौभाग्यं । श्रृणोतु भावः अस्त्यस्मिन् नगरे स्वकौशलदृप्तः दिवाकीर्तिः पटुहस्तो नाम । स च विना महाधनिकान् गरिष्ठराजपुरुषांश्च नास्मादृशानां शिरांसि स्पृशति ॥

पारि.—सर्वविदितमेतत् । ततः किं?

सूत्र—अन्यैश्च क्षुरिभिः रक्तपातं विना न समाप्यते क्षौरकर्म । अत एवाहं त्वयापहसितोस्मि ।

नैपथ्ये

अपसरत ! अपसरत मूर्खाः ! के यूयं ममापणद्वारि स्थित्वा विघ्नमाचरितुं !

सूत्र.—(सभयं) भाव ! अयमेव दुराचारः स्वापणे स्थित्वा प्रलपति ।

**दुरहंकारविशिष्टः दैवाल्लब्धप्रतिष्ठस्सन् ।**
**गणयति नैव न्याय्यं तस्मादपहास्यतां यातु ॥ ३ ॥**

तदेहि गच्छावः

इतिनिष्क्रान्तौ

इतिस्थापना

(प्रथमोऽङ्कः)

(ततः प्रविशति दिवाकीर्तिस्ससाधनः)

दिवाकीर्तिः—(अपसरतेति पुनः पठित्वा पुरतो विलोक्य) हीही कथं फलायिताः अथवा अस्यां भागधेयपुर्यां कस्समर्थो मे विप्रतीप-माचरितुं। (श्मश्रुसंपीड्य) अहमस्मि सुप्रसिद्धो दिवाकीर्तिः। यतः—

वित्तेशतुल्यविभवा धनिका नगर्यां
अस्यां प्रसिद्धतरभूपतिवल्लभाश्च।
मां व्याहरन्ति बहुगौरवमादधानाः
जानन्ति चासमपटुं स्वकुलक्रियायां ॥ ४ ॥

किञ्च बध्वाऽपि लोचने निपुणं मुण्डयतो मे कौशलं को वा न शंसति। केचिदस्माकं पवित्रतममपि कुलं नीचमिति निन्दन्ति यद्यहं शृणुयां तदा अनेनैव छुरिकया नासां छित्वा विद्रावयेयं। अहो प्रभावो मे क्षुरणकौशलस्य। यतः—

धर्ममधर्मं कुर्वे सत्यमसत्यं कुकृत्यमपि कृत्यं।
एवं कर्तुमकर्तुं शक्तोहं चान्यथाकर्तुं ॥ ५ ॥

किञ्च—

नैव स्पृशामि नीचान् शत्रूनुत्पाटयिष्यामि।
सुविशालायां पुर्यां सर्वे वर्णा ममाधीनाः ॥ ६ ॥

(विचिन्त्य)अहोऽस्यां पुर्यां दुर्लभत्वादिंधनानां महान् क्लेशस्सम्पद्यते। भवतु कञ्चित्कालमत्रैव स्थित्वा प्रतिपालयामि(इति स्थितः)

नैपथ्ये

इन्धनमिन्धनं—

(विलोक्य)अयं कोपि वैधेयः इन्धनानि गर्धभेन वाहयन्नित एवा-

भिगच्छति। भेवत्ववममुं प्रतारयामि ॥

(इति स्थितः)

(ततःप्रविशति गर्धभद्वितीयः वृद्धः काष्ठविक्रेता। इन्धनमिन्धनमित्युद्घुष्य सनिश्वासमात्मगतं)

वृद्धः—कष्टं काष्ठविक्रायिकस्य कर्म विशेषतोस्यां पुर्याम्। यतः

गत्वा क्रोशयुगं शनैरनुसरन् बालेयमुग्रातपे।
लब्ध्वा तत्र महावने कथमपि क्लेशेन शुष्केन्धनं।
प्रत्यावृत्य पुनस्तथैव नगरीं स्वेदार्द्रदेहश्श्रमात्
विक्रीयापि लभे न चार्धरजतं कुक्षिः कथं पूर्यतां॥७॥

(रासभं विलोक्य सप्रणयं)

अलघु वहति भारं लीलया रासभोयं
श्रमयति न हि गत्वा यत्र कुत्रापि माञ्च।
मम जठरनिपूर्त्यै नष्टशक्तेर्जरायाः
बहुविधमुपकुर्वन् पुत्रकृत्यं करोति ॥ ८ ॥

(हस्तेन परामृशन्)

त्वया साकं मरिष्यामि
यदि त्वं म्रियसे खर।
त्वया विना कथं वृद्धः
जीवामि धरणीतले ॥ ९ ॥

सुकृतिलभ्योऽयं गर्धभः । भगवति महाकालि जन्मान्तरेप्ययमेव मदीयो भवतु । कथं न कोपि मम काष्ठभारं क्रीणाति । अतिक्रामति च भोजनवेला । भवतु पुनर्घोषामि ।

(इति घोषयति)

(दिवाकीर्तिश्शब्दापयति वृद्धश्च आपणस्य पुरस्तिष्ठति)

दिवा.—रेकाष्ठविक्रेतः कियन्मूल्यं गर्धभोपरिस्थितानां काष्ठानां ?

वृद्धः—आर्य पादोनरूप्यं ।

दिवा.—छलं विहाय ब्रूहि ।

वृद्धः—आर्य देह्यर्धरूप्यं ।

दिवा.—तदर्धं दास्यामि ।

वृद्धः—नाहं दास्यामि ।

दिवा.—ह्स्वाणीन्धनानि तत्प्रयच्छ न कोपीतोधिकं दत्वा क्रीणिष्यति ।

वृद्धः—अतिक्रामति च वेलातत्साधयाम्यन्यत्र ।

(इति गर्धभं चोदयति)

दिवा.—(निवार्य) रे यदिच्छसि तद्ददामि अवतारय काष्ठानि ।

वृद्धः—(सर्वमवतार्य नापितं प्रति) आर्य अवतारितानींधनानि तत्प्रयच्छ संप्रति मूल्यं ।

दिवा.—कथमवतारितानि ? पुनरिशष्टं वर्तते ।

वृद्धः—आर्य कुत्र ?

दिवा.—मूढ अत्र(इत्यवलम्बनदण्डं दर्शयिति) ।

वृद्धः—(सवैलक्ष्यं)आर्य अवलम्बनदन्डः खल्वेषः ।

दिवा.—न तत्खरोपरिस्थितं काष्ठं ।

वृद्धः—अथ किं ।

दिवा.—तर्हि तदप्यवतारय समयानुसारेण ।

वृद्धः—कीदृशस्समयः ।

दिवा.—खरोपरिस्थितानां काष्ठानामर्धरूप्यामिति ।

वृद्धः—आर्य ईदृशो व्यवहारः कदापि केनापि न कृतः ।

दिवा.—(सहासं)बाढं व्यवहारनिपुणोसि अन्यथा कथं काष्ठविक्रयेण जीवसि ?

वृद्धः—भद्र अलं परिहासेन मूल्यं प्रयच्छ ।

दिवा.—(सक्रोधं)अरे नीच त्वया किल मम परिहासः शृणु रे

काष्टविक्रायिकोसि त्वं
नीचवंशसमुद्भवः ।

वृद्धः—(सक्रोधं)न नापितान्नीचवंशे समुद्भवः ।

दिवा.—

यदि प्रलपसे स्वैरं
भग्नदन्तो भविष्यसि ॥ १० ॥

वृद्धः—एवं कटुकोक्तिपरा ते जिह्वा छेत्स्यति ।

दिवा.—काणेलीमातः पश्य तवैव रसनां छेत्स्यामि(इति करण्डकात् छुरिकां गृह्णाति) ।

वृद्धः—(जनानुद्दिश्य)पश्यत पश्यत आर्याः इन्धनानि गृहीत्वा मूल्यं न प्रयच्छति(आत्मगतं)कथं सर्वे प्रहसन्ति न कोपि शृणोति । अहो प्रबलोयं नापितः । प्रातःगृहान्निर्गतेन मया बहुविधान्यनिमित्तानि दृष्टानि तेषामयं विपाकइति प्रतिभाति(नापितं प्रति)रे प्रयच्छ मूल्यं ।

दिवा.—गृह्णीष्व(इति चपेटिकां दातुमुद्युङ्क्ते) ।

(वृद्धस्सभयं वेपन)

वृद्धः—इन्धनानि गृह्णीयां(इति गृहीतुमुद्युङ्क्ते) ।

दिवा.—रे वृद्धवृक मास्पृशेंधनानि मदीयान्येतानि(इतिबलाद्वारयति) ।

वृद्धः—रे अधमाधम!

मां वञ्चयित्वा समिषैर्वचोभिः
यदार्जितं काष्ठमपाहरस्त्वम् ।
निवेद्य तद्राजकुले मयापि
प्रतिक्रिया ते क्रियते दुरात्मन् ॥ ११ ॥

(इतिनिष्क्रान्तः)

दिवा.—(धर्ममधर्ममितिपठन् इन्धनानि संगृह्य सपरितोषं निष्क्रान्तः) ।

## इति प्रथमोङ्कः

## अथ द्वितियोङ्कः प्रारभ्यते

(ततः प्रविशति विषण्णो लेखहस्तः काष्ठाजीवी)

काष्ठाजीवी—(निश्वस्य)अहो दृष्टा मया अधिकरणकाः महाधिकरणकाश्च । ते च पक्षपातेन व्यवहारं पश्यन्ति । प्रबलो मे रिपुरधिकारिप्रियश्च । कृतापमानः त्यक्तुमपि न पारयामि(विचिन्त्य) अस्मन्महाराजः न्यायप्रियः निष्पक्षपातीति च तोष्टूयते । कथं वा मादृशानां राजदर्शनो भवेत् (इति चिन्तयन् स्थितः) ।

नैपथ्ये

भो! भो! नगररक्षिणः दिवसेऽस्मिन् महाराजाधिराजः धर्मपालः नियमानुसारेण भवानीमन्दिरं प्रति गच्छति तदप्रमत्तास्तिष्ठत ।

श्रूयतां तस्य निदेशः ।

ये द्रष्टुमिच्छन्ति जना विपन्नाः
पश्यन्तु मां ते पथि यान्तमद्य ।
त्यक्त्वा च शङ्कां विनिवेदयन्तु
व्यथां च तेषां भयमत्रमास्तु ॥ ॥ १२ ॥

तन्मानिवारयत राजदर्शनोत्सुकाः प्रजाः ।

वृद्धः—(श्रुत्वा सहर्षं)अहो अद्य भार्गवो वासरः अतएव राज्ञा देवी-मन्दिरं प्रति गम्यते उच्छ्वसितामिव मे प्राणवायुना । तस्मिन्नेव

न्यायप्रिये दीनजनैकबन्धौ
कृपासमुद्रे नृपतौ निवेद्य ।
कृतापकारस्य दुरात्मनोऽस्य
विधापयिष्यामि दमं महोग्रं ॥ १३ ॥

यावद्राजागमनं प्रतिपालयामि(इत्येकान्ते स्थितः) ।

नैपथ्ये

इतइतो महाराजः

वृद्धः—(विलोक्य)अये समीपएव महाराजः ।

(ततःप्रविशति मितपरिवारो राजा)

राजा.—(साशङ्कं)दुःखबहुलो सुखाभासश्च राज्यभारः पापायतनं च राज्यं । यतः—

धर्माधर्मविचारमूढमतयो द्रव्यैकबद्धस्पृहाः
केचिन्मेऽधिकृताः जनानकरुणं संपीडयंत्यातुरान् ।
भीत्याऽस्मासु निवेदयन्ति न हि ते दुःखं मनस्स्थं जन.
तद्राजा किल पापिनां धुरि जनैस्सद्भिस्सदागण्यते ॥१४॥

तत्पापनिवृत्तये भगवर्तं शरणं व्रजामः(इति गम्भीरंपरिक्रामति)
(वृद्धस्सहसोपसृत्य पादयोःपतति)

राजा.—भद्र उत्तिष्ठोत्तिष्ठ किमागमनप्रयोजनं ?

वृद्धः—महाप्रभो अधिकरणे महाधिकरणे च अलब्धन्यायः महाप्रभुं शरणं गतोऽस्मि विमृशतु स्वामी। (इतिव्यवहारपत्रं समर्पयति)

राजा.—(पठित्वा)भद्र शब्दतोन्याय्यं दिवाकीर्तिमवलम्बते। परमार्थतस्तु भवन्तं। शब्दानुसारी किल व्यवहारनिष्कर्षः त्वमपि वराकः कुशलिना दिवाकीर्तिना विप्रलब्धोसि। अतस्त्वमेवं कुरु। (इति कर्णे वदति)

वृद्धः—अनुगृहीतोस्मि। (इति पादयोःपतित्वा निष्क्रान्तः सपरितोषं)

(ततःप्रविशति धर्मासनगतो राजा मितपरिवारः)

राजा.—(विचिन्त्य)ह्यः किल मया कश्चिद्वृद्धः प्रतीकारोपायमुपदिश्य प्रेषितः साकिमद्य प्रतिपद्यते। (इत्यालोचयन्स्थितः)

प्रविश्य दौवारिकः

दौ.—विजयतां देवः कश्चिद्वृद्धः व्यवहारार्थी द्वारि तिष्ठति। श्रुत्वा देवःप्रमाणं।

राजा.—ननु प्रवेशय।

द्वा—यथाज्ञापयति देवः(इति निष्क्रम्य वृद्धेन सह पुनःप्रविश्य) एष महाराजः उपसर्पतु भवान्।

(वृद्धःप्रविश्य राज्ञे प्रणम्य तिष्ठति)

राजा—भद्र किं त्वं व्यवहारार्थी ?

वृ.—अथ किं।

रा.—केन सह ?

वृ.—देव वसन्तचत्वरे वसता दिवाकीर्तिना पटुहस्तेन ।

रा.—किंनिमित्तं ?

वृ.—प्रभो सानुगस्य मम मुण्डनमर्धरूप्यं गृहीत्वा करिष्यामीति समयं कृत्वा मुण्डयित्वा च मां मदनुगं नामुण्डयत् यदा सानुरोधमपृच्छं तदा ताडयितुमागच्छत् ।

रा.—कस्ते सहचरः कुत्रेदानीं सः ?

वृ.—

**प्रीत्यास्पदः सहचरः**
**द्वारि तिष्ठति रासभः ।**
**विना येन क्षणमपि**
**प्राणो मे नैव तिष्ठति ॥ १५ ॥**

रा.—(सस्मितं)कः कोत्रभोः क्षिप्रमानीयतां ससाधनः पटुहस्तः ।

प्र.—यदाज्ञापयति देवः । (इतिनिष्क्रान्तः)

(ततःप्रविशति विषण्णो दिवाकीर्तिः)

दिवा.—(आत्मगतं)अहो कदापि राज्ञा अनाहूतस्य ममैवमाह्वानं नूनमनिष्टायैव । शङ्कते च मे हृदयं। भवतु गच्छामि । (इयुपसृत्य राज्ञे प्रणमति)

रा.—त्वमेव किल पटुहस्तो नाम ।

दिवा.—अथ किम् ।

रा.—भोः! अयं वृद्धः समयोल्लङ्घकइति भवन्तमपराधिस्थानमारोपयति दीयतामस्योत्तरं ।

दिवा.—(वृद्धं निर्वर्ण्य राजानं प्रति) प्रभोवृद्धोऽयं धृतोत्तमवेषः सकपटैर्वचोभिः मां रासभमुण्डने चोदयति ।

रा.—कः प्रतिबन्धः सहचरः किल तस्य रासभः ।

दिवा.—स्वामिन् ईदृशस्सहचरः अदृष्टचरः अश्रुतपूर्वश्च ।

रा.—(सक्रोधं) रे दुरात्मन्! रासभोपरिस्थिताऽवलम्बनदण्डापहरणं किं दृष्टपूर्वं? किंबहुना—

> शीघ्रं मुण्डय गर्दभं सहचरं वृद्धस्य रे पातकिन्?
> नैवं चेदचिराद्गमिष्यति तव प्राणः कृतान्तालयम् ।
> साधुं वृद्धममुं प्रतार्य बहुधा तुष्टः किल त्वं पुरा
> तस्यात्यन्तविगर्हितस्य कुमते योग्यं फलं प्राप्नुहि ॥ १६ ॥

(नापितस्त्वधोमुखस्तिष्ठति)

रा.—(प्रतीहारिणं प्रति) प्रतीहारिन् द्वारस्थं गर्दभमानय ।

प्र.—यदाज्ञपयति देवः (इति खरमानयति)

रा.—(नापितं प्रति) रे मूढ त्वरस्व ।

(नापितो लज्जितस्सन् मुण्डयति सर्वे प्रहसन्ति)

प्र.—(जनान्तिकं) पश्यत महाजनाः योऽयं दुरात्मा विना धनिनः मादृशान् स्प्रष्टुमपि जुगुप्सति स्म स इदानीं रासभं मुण्डयति । स्थाने दण्डितोऽयं मूर्खो देवेन ।

रा.—(विहस्य) रे दुरात्मन् यदीदृशमकार्यं पुनः करिष्यसि तदा क्रूरदण्डमनुभवसि ।
(प्रतीहारिणं प्रति) प्रतीहारिन् मद्वचनाद्भाण्डारिगत्वाऽस्य वृद्धस्य मुद्राशतं दापय । (वृद्धं प्रति) भद्र निगृहीतस्ते शत्रुः ब्रूहि किं ते भूयः प्रियमुपकरोमि?

वृ.—देव कृतार्थोऽस्मि इतःपरं न किञ्चित्प्रार्थयितव्यं तथापीदमस्तु

भरतवाक्यम्—

श्रीमत्कृष्णधराधिपोऽवतु चिरं कर्नाटभूमण्डलं
विद्वांसस्सुखमाप्नुवन्तु नितरां विद्यार्थिभिश्चान्विताः ।
एषा संस्कृतवाक्चिरं विजयतां सत्काव्यसंवर्धिता
दद्यात्सौख्यमुमापतिश्च भगवान् कारुण्यवारांनिधिः ॥१७॥

इति द्वितीयोऽङ्कः

समाप्तश्चायं ग्रन्थः

एच्. वि. नारायणः.
साहित्यविद्यार्थी,
महाराजसंस्कृतमहापाठशाला, मैसूरु.

पात्राणि—

१. सूत्रधारः
२. पारिपार्श्वकः
३. काष्ठविक्रेता
४. दिवाकीर्तिः
५. महाराजः
६. प्रतीहारी

# भूमिका.

अयि भोः! अनुल्लङ्घितसमीचीनप्राचीनवैदिकमर्यादा आर्यवर्याः निश्चप्रचमिदं विपश्चिदपश्चिमानां तत्रभवतां भवतां। यदद्य यावदनादिकालादारभ्य अविश्लथाव्याजविस्रम्भास्पदः प्रतिनियतवर्णस्वरक्रमादिभिर्मात्रामात्राऽपरित्यगेन सादरं भूसुरैर्मुखत एव गोप्यतया प्राणनिर्विशेषं सुसंरक्ष्यमाणः ऋग्यजुस्सामाथर्वभेदेन तथा कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकतया च विभक्तः प्रत्येकमपि नानाशाखाभेदेन भिन्नः प्रतिशाखं विधिमन्त्रनामधेयनिषेधाऽर्थवादभेदेन च विभक्तः यदर्थाधीना च पुरुषार्थसम्पत्तिर्यदुच्चारणपूर्विका ब्रह्मणो नामरूपात्मकप्रपञ्चसृष्टिः निखिलवेदाध्यनबद्धश्रद्धोपि भगवान् भरद्वाजो यदेकदेशाध्यनमात्रेण नीत्वा त्रिपूरुषायूंषि सुपरिश्रान्तो विरराम। यदङ्गतयैव शिक्षाव्याकरणादीनामनितरसाधारणं प्राशस्त्यं यद्ग्रहणाय प्राथप्राथमिको ब्रह्मचर्याश्रमः षट्त्रिंशदब्दादिकालनियमश्च यदध्ययनादेव विप्राणां पूज्यता यदनध्ययनाच्च व्रीत्यता, तादृशो महानार्याणां पवित्रतमो वेदराशिरिति. इदमपि नापरोक्षं विचक्षणानां यदस्याभ्युदयनिश्रेयसोपयोग्यर्थतत्वावधारणं विनामीमांसान्यायपरिज्ञानं नसुकरं साङ्गवेदाध्यायिनामपीति परमकरुणावारिधिर्भगवान् जैमिनिराचार्यः वेदार्थविचारात्मिकां षोडशलक्षणीं सहस्राधिकरणगर्भितां धर्ममीमांसां रचयामासेति। तदिदं मीमांसाशास्त्रं वेदार्थनिर्णयोपयोगितया दर्शनान्तरोपक्षयाऽभ्यर्हितं। तदर्थस्फुटीकरणायैव भगवता शबरस्वामिना भाष्यं कुमारिलभट्टैर्वार्तिकं च व्यरचि। तदनुसृत्यैव बहुभिः पण्डितैर्बहवो ग्रंथा व्यरच्यन्त। इदानीं कालमहिम्ना पाठप्रवचनलोपेन मुद्रणाभावेन

च ते ग्रन्था लुप्तप्राया एव वर्तन्ते। तेष्वन्यतमो मुरारिमिश्रप्रणीतोऽ-ङ्गत्वनिरुक्तिनामको ग्रन्थः। स च पाठप्रवचनादीनामत्यन्तोपयुक्तोपि अनतिविस्तृतशरीरोऽप्येतावन्तं कालममुद्रणावस्थामापन्न इति तु परं खेदावहं। तस्मिन् ग्रन्थे संभावितानेकपूर्वपक्षप्रतिक्षेपपूर्वकमंगलक्षणं, तद्विनियोजकप्रमाणानां श्रुतिलिङ्गादीनां च लक्षणं नव्यमार्गेण परिष्कृत्य सम्यक्प्रतिपादितं। तदिह तत्र तत्र पाठशालासु मीमांसाध्येतॄणां विद्यार्थिनामानुकूल्यं मनसि निधाय तन्मुद्रणोपायमन्विष्यमाणेन मया श्रीमन्महीशूर श्रीमन्महाराजसंस्कृतमहापाठशालातः प्रकाश्यमानायां त्रैमासिकपत्रिकायामेतत्पात्रिकासंपादकानां श्रीयुतयोगानरसिंहार्यमहाश-यानामभ्यनुज्ञया मुद्रापयितुं कृतोध्यवसायः। तस्माद्ग्राहकमहाशयाः प्राचीनसद्ग्रन्थरक्षणदीक्षामवलम्बमानाः स्वस्वमित्राणामपि पत्रिकाग्रहण-प्रोत्साहनेन सफलमन्तोऽस्मत्प्रयत्नं पुरस्तादुपतिष्ठेरन्निति सविनयं सादर-मावेदयति॥

**आरडिकोप्पं सुब्रह्मण्यशास्त्री.**
महाराजसंस्कृतमहापाठशाला
मीमांसाप्रधानाध्यापकः, मैसूरु.

## अङ्गत्वनिरुक्तिः

नमामि कुलजां स्वीयकुलजाद्याऽधिदेवताम् ।
सर्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुताम् ॥ १ ॥
मुरारिसंसेवनशुद्धबुद्धिः कुमारिलप्रोक्तमतानुसारी ।
मुरारिरंगत्वनिरुक्तिमेतां करोति सद्युक्तिगणैरुपेताम् ॥ २ ॥

तत्र अंगत्वं न तावज्जातिः तत्साधकाभावात् । क्रियात्वादि-जात्या सांकर्याच्च । जात्यादिसाधारणांगत्वस्य जातित्वायोगाच्च । "व्रीहिभिर्यजेते" त्यादौ व्रीहिपदवाच्यजातेरेव द्रव्यपरिच्छेदद्वारा यागाङ्गत्वस्य सिद्धान्तसिद्धत्वात् अंगत्वस्य सनिरूपकत्वेन जातित्वायोगाच्च. सकलाङ्गसाधारणानुगताकारप्रतीतेरभावादेव नाखण्डोपादित्वं । अतः शेषः परार्थत्वादिति सूत्रेण दरार्थत्वमेवांगत्वं जैमिनिराह । न च सूत्रे शेषत्वापरपर्यायाङ्गत्वे साध्ये परार्थत्वस्य पंचम्या हेतुत्वोक्तेः हेतोश्च साध्यभिन्नत्वात्कथमङ्गत्वस्य परार्थत्वरूपत्वमिति वाच्यं । तत्र शेषपद-वाच्यत्वस्य साध्यत्वात् । अत एव शेषपदवाच्यत्वानुमाने इतरभेदसाध्य-कानुमाने वा पक्षतावच्छेदतमेतदेव । अस्मन्मते साध्यवदन्यावृत्तित्वरूपसा-ध्यसामानाधिकरण्याघटितव्याप्तिज्ञानस्यैवानुमितिहेतुतया पक्षतावच्छेदक-हेत्वोरैऽपि सिद्धसाधनतोक्त्यसंभवात् । प्रकृतानुमानस्य व्यतिरेक्यनुमान-त्वेन साध्याभावव्यापकभूताभावप्रतियोगित्वरूपव्यातिरेकव्याप्तिज्ञानस्यानु मितिहेतु न तदभावाच्च । वस्तुतो व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञा-नस्य अनुमितिहेतुत्वेन पक्षतावच्छेदकहेत्वोरैक्ये न सिद्धसाधनम् । पक्षतावच्छेदकरूपहेतौ साध्यसामानाधिकरण्यग्रहकाले तुल्यवित्तिवेद्य-तया साध्ये पक्षतावच्छेदकाधिकरणवृत्तित्वभानेपि पक्षतावच्छेदकाव-

च्छिन्नविशेष्यताकसाध्यवत्तानिर्णयाभावात् । अत एव पृथिवीत्वादेरपि पृथिव्यादिलक्षणमुक्तं तार्किकैरित्यन्यदेतत् । शेषपदशक्यतावच्छेदकमप्येतदेव । अन्यानिरुक्तेः । अत एव शेषत्वस्यवक्ष्यमाणरीत्या नानात्वेन तत्पदं नानार्थकं बोध्यं । अथ किं नाम परार्थत्वं । न तावत्परोपकारकत्वं । तद्धि यद्यदुपकारकं तत्तदंगमिति विशिष्य निर्वाच्यम् । तथाच कृष्यादौ यागांगत्वप्रसङ्गः । नापि विहितत्वघटितं तत् । पश्वंगभूतप्रयाजगोदोहनादीनां पुरोडाशप्रणयनाद्युपकारकत्वेन तदंगत्वापत्तेः । अथान्यानुपकारकत्वघटितं तत् । प्रयाजादीनां पुरोडाशप्रणयनाद्युपकारकत्वेऽपि पुरोडाशान्यपशूपकारकत्वान्नोक्ताङ्गत्वप्रसङ्ग इति चेत् । उक्तानां पश्वंगत्वानापत्तेः । अथान्याप्रयुक्तत्वघटितं तत् । प्रयाजादीनां पश्वन्यपुरोडाशाद्युपकारकत्वेऽपि तदप्रयुक्तत्वान्नाव्याप्तिः । पुरोडाशान्यपशुप्रयुक्तत्वान्न पुरोडाशाद्यंगत्वप्रसंग इतिचेत् न । प्रकृतिप्रयुक्ताङ्गानां विकृत्यङ्गत्वानापत्तेः । अथ यदन्यमात्राप्रयुक्तत्वे सति यदुपकारकं यत्तत्तदङ्गम् । यदन्यमात्रप्रयुक्तत्वं च यदप्रयुक्तत्वे सति यदन्यप्रयुक्तत्वं लाघवात् । यदप्रयुक्तत्वस्यैव निवेशेऽप्रयोज्यकालदेशाद्यंगेष्वव्याप्तिः । अतो विशिष्टाभावसंपत्त्यै यदन्यप्रयुक्तत्वरूपं विशेष्यं । एवं च प्राकृताङ्गानां विकृत्यन्यप्रकृतिप्रकृतिप्रयुक्तत्वेपि विकृत्यप्रयुक्तत्वाभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावसत्वेन यदन्यमात्राप्रयुक्तकम् । अतोनाव्याप्तिरिति चेन्न । पुरोडाशकपालस्य तुषोपवापांगत्वानापत्तेः । "पुरोडाशकपालेन तुषानुपवपती" त्यत्र हि कपालेषु "पुरोडाशं श्रपयती" त्यनेन पुरोडाशप्रयुक्तत्वेनावगतस्यैव कपालस्य तुषोपवापांगत्वेन विधानात्पुरोडाशकपालस्य न तुषोपवापप्रयुक्तत्वमित्युक्तं चतुर्थे । अतस्तुषोपवापान्यपुरोडाशमात्रप्रयुक्तत्वात्पुरोडाशकपालस्य तुषोपवापांगत्वानापत्तिः । यदि तु यदन्य

प्रयुक्तत्वानवच्चेदकयदुपकारकतावच्छेदकरूपवद्यत्तत्तदंगमित्यनवच्छेदक-
त्वघटितं तत् । तथा च न प्राकृतांगांनां विकृत्यंगत्वानापत्तिः ।
तथा हि प्राकृताङ्गानां तावद्विकृत्युपकारकत्वं न प्रकृतिप्रयुक्तत्वावच्छेद-
समित्त्वादिना। सामित्वादेरननुगतत्वेन प्रत्येकातिदेशकल्पने गौरवापत्तेः।
अपि तु दर्शपूर्णमाससंबन्ध्यङ्गत्वेन सर्वाण्यङ्गान्यनुगमय्य दर्शपूर्णमास-
संबन्ध्यङ्गैर्विकृतिमुपकुर्यादित्येकातिदेशकल्पनया निरुक्तरूपेणलोपकार-
कत्वं। प्रकृतिप्रयुक्तत्वं तु तत्तद्वाक्यैस्तत्तद्रूपेणैवावगतमिति तत्तद्रूप-
स्यैव प्रकृतिप्रयुक्तत्वावच्छेदकत्वं । अतश्च विकृत्यन्यप्रयुक्तत्वानव-
च्छेदकप्रकृतिसंबन्ध्यंगत्वरूपाविकृत्युपकारकतावच्छेदकधर्मवत्वान्न प्रा-
कृताङ्गानां विकृत्यङ्गत्वानापत्तिः। न वा पुरोडाशकपालस्य तुषो-
पवापाङ्गत्वानापत्तिः । कपालित्वस्य पुरोडाशप्रयुक्तत्वावच्छेदकत्वेन
पुरोडाशीयत्वस्य च तुषोपवापोपकारकतावच्छेदकत्वेन पुरोडाश-
प्रयुक्तत्वानवच्छेदकपुरोडाशीयत्वरूपतुषोपवापोपकारकतावच्छेदकरूपव-
त्त्वादिति विभाव्येत । तदा भेदनहोमस्य दर्शपूर्णमासाङ्गत्वाना-
पत्तिः भेदनरूपनिमित्तप्रयुक्तत्वावच्छेदकविजातीयहोमत्वस्यैव। दर्शपूर्ण-
मासोपकारकतावच्छेदकत्वात् । न च प्रकृते अन्यप्रयुक्तत्वं अन्य-
तिष्ठोद्देश्यतानिरूपककृतिविषयत्वम् । तत्रोद्देश्यत्वमीप्सितत्वरूपं नत्व-
नुपादेयपञ्चकसाधारणं । तथा च भेदनादिरूपे निमित्ते उक्त-
विधोद्देश्यत्वाभावात् निरुक्तप्रयुक्ततानवच्छेदकत्वं विजातीयहोमत्वेऽ-
क्षतमिति वाच्यम् । तथापीन्द्रियादिप्रयुक्तत्वावच्छेदकदधित्वा-
दिनैव होमोपकारकत्वाद्दध्नो होमाङ्गत्वानापत्तेः । होमप्रयुक्तत्वाव-
च्छेदकदधित्वादिनेन्द्रियोपकारकत्वात्तदङ्गत्वानापत्तेश्च । किं च विजा-
तीयस्वर्गप्रयुक्तत्वावच्छेदकदर्शपूर्णमासत्वादिनैव पापक्षयोपकारकत्वाद्द-
र्शपूर्णमासादीनां पापक्षयाङ्गत्वानापत्तिः । न हि स्वर्गप्रयुक्तत्वाव-

च्छेदकवैजात्यातिरिक्तं पापक्षयोपकाकतावच्छेदकं वैजात्यमस्ति । तथात्वे स्वर्गार्थमनुष्ठितप्रयोगेण नित्यस्य प्रसङ्गसिध्यनापत्तेः । अपि च दर्शपूर्णमासप्रयुक्तत्वावच्छेदकाज्यभागत्वेनैव गृहमेधीयोपकारकत्वादाज्यभागयोर्गृहमेधीयाङ्गत्वानापत्तिः । न हि विकृत्यन्तरेऽतिदेशप्रापिताङ्गानां प्रकृतिसम्बन्धित्वेन विकृत्युपकारकत्ववदिहाज्यभागयोर्दर्शपूर्णमाससम्बन्धित्वेन गृहमेधीयोपकारकत्वं । येनान्यप्रयुक्तत्वानवच्छेदकदर्शपूर्णमाससम्बन्ध्यंगत्वरूपगृहमेधीयोपकारकतावच्छेदकरूपवत्त्वादाज्यभागयोर्गृहमेधीयाङ्गत्वं भवेत् । आज्यभागौ यजतीति गृहमेधीयप्रकरणस्थप्रत्यक्षवचनेनाज्यभागत्वेनैवाज्यभागाविधानात् । वस्तुतो दर्शपूर्णमाससम्बन्ध्यगत्वमपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकं भवत्येवेति सत्यपि तस्य गृहमेधीयोपकारकतावच्छेदकत्वेनाज्यभागयोस्तदङ्गत्वनिर्वाहः । अत एव प्राकृताङ्गानां विकृत्यङ्गत्वाभावापत्तिरपि पूर्वोक्ता तदवस्थैव । तत्तद्विकृतिभेदेन लक्षणभेदादेकविकृत्युपकारकतावच्छेदकदर्शपूर्णमाससम्बन्ध्यङ्गत्वादेरपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकत्वात् । नापि परोद्देश्यककृतिविषयत्वं परार्थत्वं । कृत्यविषये कालादावव्याप्तेः । अत एव नोक्तकृतिसमवायित्वमपि । कर्तरिलक्षणसत्वेपि प्रयाजादावव्याप्तेः । अथ समवायसाध्यत्वकालिकान्यतमसम्बन्धेन तादृशकृतिमत्त्वं । प्रयाजादौ साध्यत्वसम्बन्धेन तादृशकृतिमत्त्वसत्वान्नोक्ताव्याप्तिरिति चेन्न । जात्यादिरूपाङ्गेऽन्यतमसम्बन्धेनाप्युक्तकृतेरभावादव्याप्तेः । येनकेनापि सम्बन्धेनोक्तकृतिसम्बन्धित्वस्य निमित्तादावतिव्याप्तेरिति दुर्वचं परार्थत्वमिति चेत् । अत्र ब्रूमः । निरूपकत्वसम्बन्धेन यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितं यत्तत्वं तदङ्गत्वं । यथा दर्शपूर्णमासाभ्यामित्यत्र स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वं दर्शपूर्णमासयोरतस्तयोस्तदंगत्वं । एवं "समिधो यजती" त्यादि-

वाक्येषु प्रस्थितदर्शपूर्णमासयोरेवोद्देश्यत्वेनान्वयाद्दर्शपूर्णमासोद्देश्यताविशिष्टकृतिकारकत्वं प्रयाजादीनामतस्तेषां तदङ्गत्वं। एवं द्रव्यगुणजात्यादीनां करणत्वेन कर्तुश्च कर्तृत्वेन कालादेराधिकरणत्वेनान्वयान्नाव्याप्तिः। अत्र यत्वतत्वादेरननुगमात्स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वं स्वर्गाङ्गत्वमित्येवं रीत्या उद्देश्यतावच्छेदकभेदेन लक्षणभेदो बोध्यः। न त्वङ्गतावच्छेदकभेदेन। तस्य लक्षणेऽप्रवेशात्। अत एव स्वर्गाङ्गसकलसाधारणमेकं लक्षणं नत्वाग्नेयत्वाग्नीषोमीयत्वादिभेदेन लक्षणभेद इति ध्येयं। प्रकारतया निरूपकत्वनिवेशे गौरवान्निरूपकत्वसम्बन्धेनोक्तोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वमित्येवं सम्बन्धविधया तन्निवेशः। तत्प्रयोजनन्तु स्वाश्रयप्रयोजकत्वसम्बन्धेन तथैकज्ञानविषयत्वादिसम्बन्धेन च स्वर्गनिष्ठोद्देश्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वस्य प्रयाजादौ सत्वादतिव्याप्तिवारणं। अत्र शुद्धकृतिकारकत्वोद्देश्यताविशिष्टकृतिकारकत्वनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वानां प्रयाजादौ स्वर्गाद्यनङ्गप्रधाने च सत्वादतिव्याप्तिरतो विशिष्टमुपात्तं। उद्देश्यतात्वेनोद्देश्यताऽनुपादाने तु निरूपकत्वसम्बन्धेन स्वर्गनिष्ठप्रयोज्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वं प्रयाजादीनामतस्तदुपादानं। कृतीतिस्वरूपकथनं तन्निवेशप्रयोजनाभावात्। न च स्वर्गोद्देश्यको याग इत्यादिप्रतीत्या स्वर्गनिष्ठोद्देश्यतानिरूपकत्वस्य दर्शपूर्णमासादावपि सत्वात्तत्कारकत्वस्य च तज्जनकद्रव्यादावपि सत्वात्तत्रातिव्याप्तिवारणमेव तत्प्रयोजनमिति वाच्यं। अस्मन्मते कारकत्वस्य भावनैकनिरूपितत्वेन धात्वर्थयागाद्यनिरूपितत्वात्। स्वर्गनिष्ठत्वं च दैशिककालिकविशेषणत्वातिरिक्तस्वरूपसम्बन्धेन। इतरथा कालिकसम्बन्धेन प्रयाजादिकरणककृत्युद्देश्यताया अपि स्वर्गवृत्तित्वेनातिव्याप्तिप्रसङ्गात्। वस्तुतः स्वर्गनिष्ठत्वं विषयत्वापरपर्यायस्वरूपसम्बन्धेन।

इत्थंचोद्देश्यतात्वेनोद्देश्यत्वानुपादानेपि न क्षतिः । प्रयाजादिकरणकक्लृतिप्रयोज्यतायाः विषयत्वीयस्वरूपसम्बन्धेन स्वर्गनिष्ठत्वाभावात् । निमित्तादावतिव्याप्तिवारणाय सम्बन्धित्वं विहाय कारकत्वनिवेशः । निमित्तत्वस्य वक्ष्यमाणरीत्याऽकारकत्वाददोषः । अतएव निमित्तत्वार्थकसप्तम्या उपपदविभक्तित्वमुक्तं तत्र तत्र । कृष्यादावतिव्याप्तिवारणाय विहितेति । न चोक्तकृतिकारकत्वस्य स्वर्गेपि सत्वात्तस्य स्वाङ्गत्वापत्तिरितिवाच्यं । कर्मकारकभिन्नकारकत्वस्यैवलक्षणे निवेशात् । एतदर्थमेव सूत्रे भिन्नार्थकं परपदं । न च सूत्रे देवदत्तोयं परोपकारक इत्यादिवदौत्सर्गिकस्वप्रतियोगिकत्वलाभादङ्गभेदस्यैव परपदादुपस्थितेः कथं कर्मकारकभेदरूपस्यांगिभेदस्य ततः प्रतीतिरितिवाच्यं । समानसंवित्संवेद्यतयाङ्गिभेदस्य तस्मादुपस्थितिसम्भवात् । न हि स्वभिन्नस्वर्गोद्देश्यकक्लृतिकारकत्वरूपं लक्षणं सम्भवति । स्वत्वाऽननुगमेन अङ्गभेदेन लक्षणभेदप्रसङ्गात् । अत उक्तभेद एव परपदतात्पर्यं । ननु क्रियाजन्यफलशालित्वरूपकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवात्कर्मत्वस्याखण्डोपाधिरूपत्वेपि च सामान्यतः कर्मत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रयाजादिकरणकक्लृतिकर्मदर्शपूर्णमासादावप्यभावेन स्वर्गोद्देश्यकक्लृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवाल्लाघवेन स्वर्गत्वावच्छिन्नप्रतियोगिताकभेदस्यैव स्वर्गाङ्गत्वलक्षणे निवेशोऽस्तु । उद्देश्यभेदेन लक्षणभेदस्योक्तत्वादिति चेन्न । सर्वेभ्यो ज्योतिष्टोम इत्यादिवाक्योपात्तफलानां पश्वादीनां स्वर्गाङ्गत्वापत्तेः । स्वर्गत्वावच्छिन्नभिन्नत्वे सति उक्तकृतिकारकत्वस्य पश्वादौ सत्वात् । न च सर्वेभ्यो ज्योतिष्टोम इतिवाक्ये प्रवृत्तिप्रयोजककामनाविषयत्वस्योद्देश्यतावच्छेदकत्वात्पश्वादौ स्वर्गत्वावच्छिन्नोद्देश्यताकक्लृतिकारकत्वस्याभावान्नोक्तदोष इति वाच्यं । एतद्वाक्ये स्वर्गत्वस्योद्देश्यता

नवच्छेदकत्वेपि ज्योतिष्टोमेन स्वर्गकामो यजेतेतिवाक्ये तस्योद्देश्यताव-
च्छेदकत्वेन तदवच्छिन्नोद्देश्यताकक्रुतिकारकत्वस्य पश्चादौ सत्वात्।
वाक्यभेदेन कृतिभेदे प्रमाणाभावात्। अत एव पश्वर्थमनुष्ठितप्रयोगात्स्व-
र्गस्याप्युत्पत्तिर्योगसिध्यधिकरणोक्ता सङ्गच्छते। अतश्चाखण्डोपाधि-
रूपकर्मत्वस्वीकारे स्वर्गोद्देश्यककृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदघटि-
तमेवलक्षणमङ्गीकार्यं। वस्तुतस्तु स्वावच्छिन्नोद्देश्यतानिरूपककृति-
निरूपितोद्देश्यताकत्वसम्बन्धेन स्वर्गत्ववद्भिन्नत्वं प्रकृतलक्षणे निवेश्यं।
स्वर्गपश्वादेश्च तेन सम्बन्धेन स्वर्गत्ववत्त्वान्नातिव्याप्तिः। न चैवमपि
दर्शपूर्णमासादौ स्वर्गाद्यङ्गत्वानापत्तिः। व्रीहिभिर्यजेतेत्यादिवाक्येषु
स्वर्गोद्देश्यताकदर्शपूर्णमासाद्यनुकूलकृतावेव दर्शपूर्णमासयोरुद्देश्यत्वेन
स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यताकत्वसम्बन्धेन स्वर्गत्व-
वत्त्वस्य दर्शपूर्णमासादौ सत्त्वादितिवाच्यं। स्वावच्छिन्नोद्देश्यतानि-
रूपकतावच्छेदकावच्छिन्ननिरूप्यताकोद्देश्यताकत्वसम्बन्धेन स्वर्गत्वव-
द्भिन्नत्वस्य विवक्षितत्वात्। दर्शपूर्णमासकरणककृतौ स्वर्गोद्देश्यकत्व-
मित्यादिप्रतीत्यात्विह दर्शपूर्णमासकरणककृतित्वे स्वर्गत्वावच्छिन्नोद्दे-
श्यतानिरूपकतावच्छेदकत्वं सिद्ध्यतीति तदवच्छिन्ननिरूपितोद्देश्यता-
कत्वसम्बन्धेन स्वर्गत्ववत्त्वं स्वर्गे यागे तद्भिन्नत्वमिति लक्षणसमन्वयः।
न ह्येवंस्वर्गत्वावाच्छिन्नोद्देश्यतानिरूपकतावच्छेदकत्वं व्रीहिकरणककृति-
त्वेऽस्ति। येनतदवच्छिन्ननिरूपकताकोद्देश्यताकत्वसम्बन्धेन स्वर्गत्ववत्त्वं
यागे सम्भाव्येत। व्रीहिकरणककृतौ स्वर्गोद्देश्यकत्वमितिप्रतीतेरभावात्।
वृत्यनियामकसम्बन्धस्याऽत्यन्ताभावप्रतियोगितानवच्छेदकत्वेपि भेदप्रति-
योगितावच्छेदकतावच्छेदकत्वस्य सिद्धान्तसिद्धत्वाच्च न सिद्धान्त-
विरोधः। सूत्रमपीदृशभेदपरतयैव व्याख्येयं। नन्वेवं सोमादेरपि
स्वर्गाङ्गत्वं स्यात्। नवीनमते मत्वर्थलक्षणानङ्गीकारेण यागस्यैव सोम-

स्यापि स्वर्गोद्देश्यककृतिकारकत्वात् । न च कारकत्वं वक्ष्यमाणरीत्या क्रियान्वितकर्तृत्वाद्यन्यतमान्वितत्वं। तत्र क्रियान्वितत्वं कारकान्तराघटितसम्बन्धेन प्रकृतलक्षणे निवेश्यं। तथा च सोमकरणत्वस्य स्वनिरूपकयागकरणकत्वसम्बन्धेनैव भावनान्वयादुक्तसम्बन्धेन क्रियान्वितकर्तृत्वाद्यन्यतमान्वितत्वाभावान्नसोमे लक्षणातिप्रसङ्ग इति वाच्यं। तथात्वे यागकरणत्वादेरपि स्वनिरूपकोद्देश्यकत्वादिरूपकर्मकारकघटितसम्बन्धेनैव भावनान्वयेनासम्भवापत्तेः । अथ उक्तातिव्याप्तिवारणाय प्रकृतकृतिकरणाघटितसम्बन्धेन क्रियान्वितत्वं प्रकृतलक्षणे निवेश्यं । समिधो यजतीत्यादौ प्रयाजादिकरणत्वस्यैव कृत्यन्तरकरणीभूतदर्शपूर्णमासादिरूपभाव्यघटितसम्बन्धेनैव भावनान्वयादव्याप्तिः । अतः प्रकृतेति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजतेति वाक्यघटकाख्यातोपात्तकृतौ दर्शपूर्णमासयोः करणत्वेपि समिधो यजतीत्यादिवाक्यघटकाख्यातोपात्तसमिदाद्यनुकूलकृतौ तयोरुपकारविशिष्टयोर्भाव्यत्वमेवेति नाव्याप्तिः। सोमेन यजेतेत्यादौ यागकरणत्वस्योद्देश्यस्वर्गादिघटितसम्बन्धेन भावनान्वयेपि प्रकृतकृतिकरणयागाद्यघटितसम्बन्धेनैव त्रियान्वयान्नोक्तदोषः। सोमादेस्तु प्रकृतकृतिकरणयागादिघटितसम्बन्धेनैव भावनान्वयान्नातिप्रसङ्ग इति चेन्न । दध्ना जुहोतीत्यादावग्निहोत्रकरणककृतावेवाग्निहोत्रस्योद्देश्यत्वेन तत्र च स्वनिरूपतोद्देश्यताकत्वरूपप्रकृतकृतिकरणघटितसम्बन्धेनैव दधिकरणत्वस्यान्वयाद्दध्नो होमाङ्गत्वानापत्तेः। कृतौ प्रकृतत्वानिरुक्तेश्च। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिवाक्ये तत्तद्व्यक्तित्वादिरूपप्रकृतत्वसम्भवेपि दर्शपूर्णमासाङ्गप्रतिपादकसकलवाक्यसाधारणप्रकृतत्वानिरुक्तेश्च । यदि तु स्वर्गोद्देश्यकत्वादिकमेव कृतौ प्रकृतत्वमतो नायं दोष इति विभाव्यते तथापि दध्यादावव्याप्तिस्तदवस्थैव । ततः सोमादौ स्वर्गाङ्गत्वप्रसङ्गो दुर्वार इति चेत् । सत्यं । सोमादीनां स्वर्गाङ्गत्वमिष्टमेव ।

न हि तत्स्वीकारे किञ्चिद्बाधकमस्ति । न चैवं तुल्यतया योदीक्षितो यदग्नीषोमीयं पशुमालभेतेत्यत्र यागस्येव पश्वादेरपि ज्योतिष्टोमाङ्गत्व-प्रसक्तौ तद्वदेव ज्योतिष्टोमविकृतावतिदेशापत्तिः । अग्नीषोमीयपृष्ठ-भावेनातिदेशस्येष्टत्वादग्नीषोमीयाभाववत्यां विकृतौ तु द्वारलोपादेव नातिदेशः । अग्नीषोमीयस्थानापन्नयागान्तरसत्वे तु तस्याग्नीषोमीयवि-कृतित्वादेवातिदेशः । सोमादेः समप्राधान्यन्तु यागद्वारेणैवाङ्गत्वेन निरसनीयमिति ध्येयं । उद्देश्यत्वमत्रेप्सिततत्वरूपं नत्वनुपादेयपञ्चक-साधारणं । तथात्वे यावज्जीवमित्यादौ धात्वर्थादेर्निमित्ताद्यङ्गत्वस्य दुर्वारत्वात् । अतएव यत्रानुपादेयपञ्चकसाधारणोद्देश्यताया निवेशः यथा परोद्देश्यककृतिव्याप्यत्वरूपप्रयोज्यत्वे । तत्र निमित्तप्रयोज्यत्वं नैमि-त्तिकस्येष्टमेव । अतएव द्वितीयाविभक्तेरङ्गत्वघटकोद्देश्यत्वबोधकत्वे-नाङ्गत्वप्रमाणत्वव्यवहारः । तृतीयादेस्तु तद्घटितकरणत्वादिविभक्त्य र्थबोधकत्वेन तत्वव्यवहारः । लिङ्गादीनान्तु बलाबलाधिकरणन्याये-नैतदन्यतरबोधकद्वितीयातृतीयादिरूपश्रुतिकल्पकत्वेन सः । एतेन द्वितीयायाः प्राधान्यरूपोद्देश्यत्ववाचीत्वेनाङ्गित्वप्रमाणत्वेपि नाङ्गत्वप्रमा-णत्वमिति निरस्तं । अङ्गत्वेप्युद्देश्यतायानिविष्टत्वेन तदेकदेशबोध-कत्वेनैव तत्प्रमाणत्वोपपत्तेः । इतरथा तृतीयादेरपि समुदिताङ्गत्वा-र्थकत्वाभावेन तत्प्रमाणत्वानापत्ते ; दृष्टश्च तदेकदेशप्रमाजनकत्वेपि तत्प्रमाजनकत्वव्यवहारः । यथापरमते द्वितीयायाः फलमात्रप्रमाजन-कत्वेपि तद्घटितकर्मत्वप्रमाजनकत्वव्यवहार इति ॥

## अथ कारकत्वविचारः

ननु किन्नामकृतिकारकत्वं । नतावत्कृतिहेतुत्वं । धात्वर्था-दिरूपकरणकारकेऽव्याप्तेः । न हि कृतिसाध्ये यागादौ कृतिहेतुत्वं

सम्भवति । पूर्ववृत्तित्वाभावात् । दध्यादिगुणरूपकारके पूर्ववृत्तित्व-सत्वेपि रासभादिवदन्यथासिद्धत्वेनानन्यथासिद्धत्वांशाभावाच्च । अत एव भावनाकरणत्वं भावनाभाव्यनिर्वर्तकत्वरूपं पारिभाषिकमिति सांप्रदायिकाः । निमित्तादौ कृतिहेतुत्वसत्वेन अतिव्याप्त्यापत्तेश्च । नापि कृत्यन्वितत्वं । धात्वर्थे यागादौ करणत्वादिसंबन्धेन भावना-न्वयस्वीकारेण लक्षणोपपत्तावपि तदितरकारकाणां विभक्त्यर्थे करण-त्वादावेवान्वयेन तेष्वव्याप्तेः । करणत्वादीनामपि कृत्यन्वितत्वेनाङ्ग-त्वापत्तेश्च । न हि सोमो यागाङ्गमितिवत्सोमकरणत्वं यागाङ्गमिति-कश्चित्प्रत्येति । गुणफलसंबन्धविधावेव परं गुणकरणत्वं फलाङ्गमित्युक्तं सांप्रदायिकैः । वस्तुतस्तु तत्रापि गुणस्यैव फलाङ्गत्वमितरवैलक्षण्ये प्रमाणाभावात् । भवन्मते दध्यादेर्होमार्थत्वात्तत्करणत्वस्यचेन्द्रियार्थत्वा-देकस्यतूभयत्वे संयोगपृथक्त्वमिति सूत्रे एकस्यैवोभयार्थत्वोक्तिविरोधप्र-सङ्गाच्च । न च दध्नाजुहोतीत्यत्रापि दधिकरणत्वस्यैवहोमोद्देशेन विधानान्नानुपपत्तिरितिवाच्यं । तथात्वे दधिकरणत्वस्येन्द्रियकामवाक्य इह स्वनिरूपकाश्रयापेक्षत्वात्तस्य प्रमाणान्तरेणानुपस्थितेरेतद्वाक्यान्निरा-कांक्षप्रतिपत्त्ययनापत्तेः । इन्द्रियकामवाक्ये तु प्रकरणेन स्वनिरूपकी-भूतहोमरूपाश्रयसंभवान्निराकांक्षप्रतिपत्तिरिति विशेषः । किं च दधि-करणत्वस्य होमोद्देशेन विधौ तस्यादृष्टविधया होमोपकारकत्वेपि दृष्ट-विधया तदजनकत्वाद्धोमसिद्ध्यर्थमनियतद्रव्याक्षेपापत्तिः । एतद्विधे-रपूर्वविधित्वापत्तिश्चेति ध्येयं । नापिकृत्यन्वितान्वितत्वं । धात्वर्थस्य करणत्वसंबन्धेन कृत्यन्वितत्वात्तत्राव्याप्ते । यदि तु यागकरणिकाभावने-त्यादिप्रतीतेः प्रकारतया करणत्वावगाहित्वात्तृतीयान्तनामपदसामाना-धिकरण्याच्च धातुलक्षितस्यैव भावनान्वयः । धात्वर्थस्य तु करण-त्वएवान्वयान्नोक्ताव्याप्तिरिति विभाव्यते तथापि लिङ्गसङ्ख्याभिन्न-

सुबर्थमात्रस्यैव भावनान्वयनियमेन भिन्ने जुहोतीत्यादौ सप्तम्याद्यर्थ-निमित्तत्वादेरपि तदन्वयात्तदन्विते निमित्तादावतिव्याप्तिरिति चेन्न। कृत्यन्वितविभक्त्यर्थान्वितत्वस्य कृतिकारकत्वरूपत्वात्। विभक्त्यर्थत्वं च विभक्तिशक्यत्वमतो न निमित्तत्वादिकमादाय निमित्तादावतिव्याप्तिः। सप्तम्या अधिकरणत्वार्थकत्वेन निमित्तत्वे शक्त्यभावात्। न च विभक्तिशक्यत्वं विभक्तिनिरूपितशक्तिविषयत्वं। तथा च निमित्तत्वस्य सप्तमीनिरूपितशक्तिविषयत्वाभावेपि षष्ठ्याः शेषे षष्ठीत्यनुशासनात्सं-बन्धसामान्यार्थकत्वेन तदन्तर्गतनिमित्तत्वेपि षष्ठीनिरूपितशक्तिविषय-त्वावश्यंभावात्तदादाय निमित्तादावतिव्याप्तिस्तदवस्थैवेति वाच्यं। विभक्तिनिरूपितसंबन्धत्वानवच्छिन्नशक्तिविषयत्वस्य विवक्षितत्वात्। षष्ठीशक्यतावच्छेदकं हि संबन्धत्वमेव। अतो न दोषः। अतएव सप्तदशवैश्यस्येत्यादौ षष्ठीतो निमित्तत्वत्वेन निमित्तत्वप्रतीतिर्लक्षणयैवेति बोध्यं। स्वर्गकामो यजतेत्यादौ करणत्वस्य धातुलक्ष्यत्वेपि वस्तुतो विभक्तिशक्यत्वानपायान्नदोषः। एवं सक्तून् जुहोतीत्यादावपि विनि-योगभङ्गाङ्गीकारेण द्वितीयायाः करणत्वलक्षणायामपि वस्तुतस्तस्य विभक्तिशक्यत्वानपायान्नसक्तूनां होमांगत्वविरोधः। अत एवं रीत्या सोमा रौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणाम्॥

(अनुवर्तते)

आ. सुब्रह्मण्यशास्त्री.

# कुवलयानन्दपाठसंशोधनं

III

१. एवं विषादनालङ्कारलक्ष्यत्वेनोदाहृते—'रात्रिर्गमिष्यति भविष्यति च प्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः इतिपद्ये पूर्वार्धं—'रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजं च।' इति प्राचीनतरलिखितपुस्तकेषु परिशुद्धपाठतया संलक्ष्यते मुद्रितेष्वपि सुभाषितावळ्यादिषु (१२१) एवमेव दृश्यते। अयं च 'भविष्यति सुप्रभातमित्यादि पाठस्साधीयानित्येवं वयं प्रतीमः यतः मध्यस्थचकारस्य समुच्चयार्थकत्वात् तस्य अन्तिमवाक्ये 'हसिष्यति पङ्कजञ्चे'त्यत्र निवेशः प्रशस्यः अन्यथा स्वारस्यभङ्गः इत्यनुभवसिद्धः हसिष्यति पङ्कजञ्चेति पाठापेक्षया हसिष्यति पद्मिनी चेति सुभाषितावळी (१२१) पाठ एव श्रेयान्। तथा हि कविसमये सूर्यपद्मिन्योः नायिकानायकव्यवहारं समाश्रित्य वर्णनं दृष्टचरं, प्रकृते नायकस्य सूर्यस्य उदये सति तन्नायिकायाः पद्मिन्याः हासस्समुचित इत्ययमंशोपि प्रतीयते। हसिष्यति पङ्कजश्रीरिति समुपलभ्यमानपाठे तु पङ्कजानां श्रीः—संपत्। शोभावाहाससमय एवेति द्वयोरन्यतरूपादानेपि विवक्षितार्थप्रतीत्या 'व्यर्थमाहुर्गतार्थं यत् यच्च स्यान्निष्प्रयोजनं' इति भोजराजजल्पितव्यर्थत्वरूपदोषस्य प्रसरणमभ्युपगतं स्यात्। यथा 'मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयतीत्यादौ। एवं च अपुष्टत्व(व्यर्थत्व)रूपदोषप्रसङ्गभिया, चतुर्षु वाक्येषु समुच्चायकचकारस्य 'भवान् सोमस्तथा कृष्णो रामश्चात्रावसन् वने' इत्यादिवाक्यवत् अन्तेनिवेशस्य अभ्यर्हितत्वाच्च, 'रात्रिर्गमिष्यति भविष्यति

सुप्रभातं भास्वानुदेष्यति हसिष्यति पद्मिनी चेति सुभाषितावळ्यादौ लक्ष्यमाणः पाठ एव साम्प्रतमिति सुधियस्स्वान्ते सरसं समालोचयन्तु । उत्तरार्धेऽपि हामूलतः कमलिनीं गज इति सुभाषितरत्नभाडागारे पाठस्संलक्ष्यते ॥

१. भाविकालङ्कारस्य 'अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते । वाचं निशम्य नयनं नयनं ममेति किंञ्चित्तदायकरोत्स्मितमायताक्षी' ति पद्यं उदाहारि दीक्षितैः । अत्र चन्द्रिकाकाराः 'स्तनतटात्पतितं प्रवृत्ते इत्येव पाठमुररीकुर्वन्तः, मम नयनं नयनमिति तस्या वाचं निशम्य स्तनतटात्पतितमुत्तरीयं धर्तुं पुरः प्रवृत्ते मयि सति तदा आयताक्षी स्मितमकरोदिति व्याचख्युः । वस्तुतस्तु स्तनतटपतितोत्तरीयधारणकर्तृत्वं नायकस्य न रुचिरं किंतु नायिकाया एव उचितमिति कोविदानामविदितमेतत् अतोऽत्रश्लोके स्तनतटात्पतितं प्रवृत्ता इत्येवं पाठसमादरणं सांप्रतं । तथात्वे सहृदयानन्दस्समुन्मिषति । तथा हि । स्तनतटयोरुच्छ्रितत्वेन स्वभाववशाद्गळितमुत्तरीयं धर्तुं नायिका यदा प्रावर्तत तदा अकस्माद्दृष्टोत्तरीयच्युतिसमालक्षितविशालस्तनतटसौन्दर्यानुभवप्रफुल्लितचक्षुष्मतां परिहर्तुमनीहमानो नायकस्सहसा मम नयनं नयनमित्यभिदधौ । नयनपदस्य नेत्र–वस्त्र–एतदुभयार्थकत्वं वक्तव्यं । तथा च मम नयनं उत्तरीयरहिते स्तनतट एव कीलितं किमर्थं परिदधासि इत्येकोऽभिप्रायः । मम वस्त्रं तत्, त्वं तावत्कुतो धारयसीत्यन्योप्यर्थः विवक्षितः । तदा नायकाभिप्रायं विदित्वा नायिका स्मितमकरोदिति यत् तदद्यापि मे दृशोः पुरतस्तिष्ठतीति प्राचीनश्लोकस्याभिप्रायो वर्णनीयः । अत्र यद्यपि नयनपदस्य वस्त्रवाचकत्वं न प्रामाणिकं तथापि 'नेत्रं मथिगुणे वस्त्रभेदे' इति मेदिनीकोशवशान्नेत्रशब्दस्य उभयार्थबोधकत्वमनुशिष्टं । तथा-

चात्र नयनपदेन स्ववाचकत्वरूपशक्यसंबन्धेन नेत्रपदं लक्ष्यते तस्माच्च वस्त्रप्रतीतिः द्विरेफादिवद्ज्ञेया अथवा वचोबाणैरित्यादिवत् नयनपदात् स्ववाचकवाच्यत्वरूपशक्यसंबन्धेन वस्त्ररूपस्य लक्ष्यस्य प्रतीतिस्सम्भवतीति लक्षितलक्षणा समादरणीया। सुभाषितरत्नभाण्डागारादौ 'स्तनतटात्पतितुं प्रवृत्ता' इति स्त्रीलिङ्गपाठएव दरीदृश्यते (पु. २९२) तदेवोचितमित्यहमप्यभिप्रैमि। कुम्भघोणमुद्रापितरसिकरञ्जनीसमेतकुवलयानन्दव्याख्यायां पतितुं प्रवृत्ता इत्याकारकं पाठमेवाश्रित्य 'द्वितीयोदाहरणे नायिकायां स्तनतटच्युतोत्तरीयग्रहणप्रवृत्तायां मदीयं वस्त्रमित्यतर्कितोपनतप्रियतमवचनाकर्णनजनितस्मितस्य नायकेन 'अद्यापि तिष्ठति दृशो' रिति प्रत्यक्षायमाणत्वोक्तेः अत्रापि भाविकमिति लक्षणसमन्वयश्च प्रदर्शितः अतः चन्द्रिकाकाराणां 'मालिन्यमब्जशशिनोरिति' श्लोक इव अत्रापि पाठः क्लेशावह इति सिद्धं॥

३. एवमेव चन्द्रिकाकाराः 'चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित्। एको वक्ति प्रथमनिहतं कैटभं कंसमन्यस्स त्वं तत्वं कथय भगवन् को हतस्तत्र पूर्वं'॥ इत्यनुभयाभेदरूपकस्योदाहरणत्वेन दत्तेऽस्मिन्पद्ये चन्द्रज्योत्स्ना पुलिने सैकते, वक्ति कैटभं प्रथमनिहतं कंसं, भगवन् इत्यादिपदेषु क्लेशेनैव विवरणं प्रकट्यकार्षुः। एतच्च कुवलयानन्ददृश्वनां व्यक्तमेवेति न तद्विपरीतुं प्रयत्यते, सुसंस्कृतपाठस्त्वेषः श्लोकः व्यक्तिविवेके (१२६ तमे पृष्ठे) 'ज्योत्स्नापूरप्रसरधवळे सैकतेऽस्मिन् सरय्वा वादद्यूतं सुचिरमभवत्सिद्धयूनोः कयोश्चित्। एकः प्राह प्रथमनिहितं केशिनं कंसमन्यस्सत्वं तत्वं कथय भवता को हतस्तत्र पूर्वमिति उपलभ्यते। एवमादिप्राचीनात्रुटितताळकोशसंमुद्रितशुद्धकोशादिना पाठभेदाः परिष्करणीया बहवो वर्तंते।

एवमेव पाठ आदरणीय इत्यत्र पत्रिकान्तरे उपपत्तयः प्रदर्शिताः। तास्तु परीक्षकैरवश्यं प्रेक्षणीयाः ॥

४. तत्र व्यक्तिविवेके 'चक्राभिघातप्रसभाज्ञयैव चकार यो राहु-वधूजनस्य' इत्यलङ्कारसर्वस्वकारादिभिरुदाहृतं पद्यं पर्यायोक्तयलङ्कार-प्रकरणे दीक्षितैरप्युदाहारि। अत्र श्लोके चक्राभिघातेति पाठः सर्वेषु मुद्रितेषु ध्वन्यालोक व्यक्तिविवेक अलङ्कारसर्वस्व कुवलयानन्द रसगङ्गा-धरादिषु ग्रन्थेषु एकविध एव संदृश्यते। व्यक्तिविवेकव्याख्याकृतातु द्वितीये विमर्शे एकाभिघातप्रसभाज्ञयैवेति पाठ आदृतोस्ति। तस्मिन् संस्कृतपाठे उपपत्तिश्च प्रदर्शिता। तथा हि। अयं च श्लोकः हय-ग्रीववधकाव्यस्थः तत्र एकाभिघातेत्येव पाठोऽस्ति। अत्र सुदर्शनाख्यस्य चक्रस्य यच्छब्देन परामर्शः न तु भगवतो वासुदेवस्य सुदर्शन-शब्दस्य पुल्लिङ्गत्वेन यइत्यनेन स एव परामर्शनीयः न तु नपुंसकं चक्रं तदानीं 'चकार योराहुवधूजनस्येति वर्तितव्यं एवं च यः सुदर्शनः एकाभिघातेनैव राहुवधूजनस्य विशिष्टं रतोत्सवं चुंबनमात्रशेषं चकार स इति उत्तरत्रान्वेति। न च पाञ्चजन्यश्चक्रंसुदर्शनं इत्यमर-सिंहेन सुदर्शनशब्दस्य नपुंसकत्वेनानुशिष्टत्वात् पुल्लिङ्गता तस्य कथं सम्भवतीति वाच्यं सुदर्शनशब्दस्य नपुंसकत्वपाठः लिङ्गानुशासन-विरुद्धइत्यमरसुधायां चक्रं सुदर्शनः इत्येव पाठस्समादृतः तादृशपाठस्य शुद्धत्त्वे 'आतोयुचे' कृदन्ते (पा. सू. ३. ३. १२८) सूत्रस्थ 'भाषायां शासियुधि, दृशि धृषि मृषिभ्यो युज्वाच्य इति वार्तिक-बलात्। युजन्ताः दुःशासनः दुर्योधनः, सुदर्शनः इत्यादयः पुल्लिङ्गाश्शब्दास्सिद्धा भवन्तीति वार्तिकं प्रमाणत्वेन प्रदर्शितं, 'सुदर्शनो हरेश्चक्रमेरुजम्बुद्रुमे पुमानिति कोशश्च प्रमाणीकृतः एवं च कुवलयानन्दे पर्यायोक्त्युदाहृत 'चक्राभिघातप्रसभाज्ञयैवेति पद्ये

एकाभिघातेति पाठः प्रशस्य इति कोविदा विदांकुर्वंतु उपन्यस्तविषये प्रमाणत्वेन व्यक्तिविवेकव्याख्यातृवचनं प्रदर्श्यते । व्यक्तिविवेकव्याख्या (३७ पृष्ठे) चक्राभिघातेत्यत्र 'एकाभिघातेत्येव हयग्रीववधे पाठः स्थितः सुदर्शनस्य पुल्लिङ्गस्य प्रकान्तत्वात् । यइत्यनेन परामर्शात् तत्तु अनवबुध्य चक्रं यदि परामृश्यते तदा यच्छब्दस्य नपुंसकता स्यात् तन्मुरारिरेवात्र परामृश्यतइत्याशयेन चक्राभिघातेति पठन्ति नत्वयं तत्र प्रस्तावः' इति । एवं च पर्यायोक्तिप्रकरणे 'यत्तु तत्र राहुशिरश्छेदावगमनं तत्तु प्रागुक्तरीत्या प्रस्तुताङ्कुरएव । प्रस्तुतेन राहोश्शिरोमात्रावशेषेण आलिङ्गनवन्ध्यत्वाद्यापादनरूपेवाच्य भगवतो रूपान्तरे उपपादिते भगवतः स्वरूपेणावगमनं पर्यायोक्तस्य विषयः इति कुवलयानन्दकाराणां, यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपान्तरेण व्यङ्ग्यतया बाधकाभावादिति चन्द्रिकाकारादीनां च भाषणानि आकरग्रन्थानवलोकनभ्रमजन्यानीत्येवेति तेषां सूक्तिषु के वा श्रद्दधीरन्? यदि तेषां सूरिवराणां सूक्तयः सङ्कच्छेरन्नेवेति प्रकामं पण्डितप्रकाण्डेन प्रमाणं प्रदर्श्यते तदा तत्र विश्वसिमः इत्यलं पल्लवतल्लजकल्पप्रसक्तानुप्रसक्तपरिचिन्तनेन ॥

प्रसक्ते 'अद्यापि तिष्ठति दृशोरिदमिति' श्लोके भाविकालङ्कारलक्षणसमन्वयः प्रदर्शितः भाविकस्य तत्त्वेन व्यपदेशे, अलङ्कारत्वे क्लृप्तालङ्कारबहिर्भूतत्वे च युक्तिप्रमाणादिप्रपञ्चनं कुवलयानन्दे यद्यपि न कृतं तथापि विद्यार्थिबुद्धिवैशद्याय श्लक्ष्णो विचारः प्रकृते प्रस्तूयते । अयं च भाविकालङ्कारः लोकन्यायमूलकालङ्कारेष्वन्यतमः । तस्य लक्षणं तु 'भवेद्यत्राद्भुतार्थस्य वर्णनाद्भूतभाविनोः । अपरोक्षायमाणत्वं तत्र भाविकमुच्यते । भूताः—पूर्वकालिकाः सध्वंसा इति यावत् भाविनः—उत्तरकालिकाः पदार्थाः—सप्रागभावाः तेषां प्रत्यक्षाय-

माणता यत्र तत्र भाविकं, ननु सम्बन्धो वर्तमानं च गृह्यते चक्षुरादिनेतिन्यायेन सध्वंससप्रागभाववस्तुनोः प्रत्यक्षवदवभासो विरुद्ध इति चेत्तत्र हेतुः अद्भुतार्थस्य वर्णनादिति। यथा वा योगिनामैकाग्र्यलक्षणया भावनया अतीन्द्रिय कालान्तरीयदेशान्तरीयवस्तुसाक्षात्कारः, यथा च विरहिपथिकादीनां निरन्तरकामिनीभावनया 'सा सा सा सा जगति सकले कोऽयमद्वैतवाद' इतिवत् प्रत्यक्षायमाणत्वं, तथा काव्यतत्वविदां रमणीयार्थप्रतिपादककाव्यतत्वगतात्यद्भुतत्वानुसन्धानप्रयुक्तया भावनया अतीतानागतपदार्थसाक्षात्कारो युज्यतएवेति पिण्डितोऽर्थः। एवं च अतीतानागतानां सन्निकर्षविरहेपि स्वरूपातिशयमाहात्म्येन तत्कृतोत्कर्षवत्तया विवक्षणादलङ्कारत्वं भाविकस्य युज्यते, भावः—कवेरभिप्रायः श्रोतरि प्रतिबिम्बितत्वे नास्तीति भाविकं इति भावः—कवेः अभिप्रायः—भूतभाविनोरपि लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छारूपः अस्ति अस्येति विषयत्वाख्यसम्बन्धपरषष्ठीसमर्थातमत्वर्थे ठन्प्रत्ययः अस्मिन्निति विग्रहप्रदर्शनं तु 'सप्तम्यां च न तौ स्मृतादिति भाष्यविरुद्धं इति, भावाय—साक्षात्काराय प्रभवतीति 'तस्मै प्रभवति स सन्तापादिभ्य इति ठञ्' इति वा व्युत्पात्तिं प्रामाणिकाः प्रत्याययन्ति। एवं च अलङ्काराणां परस्परविच्छेदात्मकवैलक्षण्यस्य हेतुभूतायाः जन्यतासंसर्गेण काव्यनिष्ठायाः कविप्रतिभायास्साम्राज्याद्भाविकस्य अलङ्कारत्वं सुस्थं। अतःपरं क्लसालङ्कारबहिर्भूतत्वं साध्यते। अद्यापि तिष्ठतीत्यादौ प्रत्यक्षासम्बन्धेऽपि तत्सम्बन्धवर्णनाद्वा अतिशयोक्त्यैव गतार्थतेतिचेन्न। एतादृशातिशयोक्तेः सर्वालङ्कारानुप्राणकत्वेन वर्तनं आवश्यकमिति विशेषालङ्कारप्रसङ्गे 'सर्वत्रैवं विधे विषये अतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालङ्कारत्वाभावा' दिति काव्यप्रकाशकृता मम्मटभट्टेन, 'सैषा

सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविभिः कार्यः कोलङ्कारोऽनया विना' इति भामहाचार्येण, 'अलङ्कारान्तराणा-मप्येकमाहुः परायणं। वागीशमहितामुक्तिमिमामतिशयाह्वयामिति दण्ड्याचार्येण च भाषितत्वात्, न च सम्बन्धातिशयोक्त्या अगतार्थमपि कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्त्या कबळीकृतमेवेति वाच्यं, विष-यतातिरिक्तसम्बन्धावच्छिन्नकार्यतावच्छेदकधर्मावच्छिन्नतादात्म्यातिरिक्त-सम्बन्धावच्छिन्नकारणतावेच्छदकधर्मावच्छिन्नात्प्रागुत्पत्तावेवातिशयोक्तेर-भ्युपगतत्वात्। कारणात्प्राक्कार्योत्पत्तिरित्यनेन प्रकारेणोक्तावेवातिश-योक्तिः। भाविविषयप्रत्यक्षेत्वेनोक्तौ भाविकमित्याश्रुतत्वात्, किं च अतिशयोक्तिगतं कार्यतावच्छेदकं, कार्याधिकरणवृत्तिप्रागभावप्रतियो-गित्वेनोक्तं यत्कारणं तत्प्रतियोगिककार्यतावच्छेदकं अत्रत्यं तु प्राग-भावप्रतियोगित्वेन यत्कारणमुक्तं तदतिरिक्तकारणताप्रतियोगिककार्य-तावच्छेदकमिति भेद इति विभावनीयं, अत एव अत्यद्भुतातथ्य-वर्णनरूपात्युक्त्यलङ्कारेपि नांतर्भवितुमर्हति। अत्युक्तेरपि अतिशयो-क्तिविशेषरूपत्वेन प्रागुक्तयुक्ते जागरूकत्वात्। नापि स्वभावोक्त्येदं निगीर्यते लौकिकवस्तुगतसूक्ष्मधर्मस्य यथावदन्यूनानतिरिक्तत्वेन वर्ण-नया प्रत्यक्षायमाणत्वं स्वभावोक्तौ, भाविके तु अत्यद्भुतत्वेन लोको-त्तराणां वस्तूनां स्फुटतया ताटस्थ्येन प्रतीतिरिति महान् भेदः। नापि रसवदाद्यलङ्कारेऽन्तर्भवितुं सांप्रतं तत्र विभावानुभावाद्यनुसन्धानेन परमाद्वैतज्ञानिवन्ममैवेते शत्रोरेवैते तटस्थस्यैवैते इत्यादिविशेष-परिहारात्साधारण्येन सकलसहृदयसम्पादभाजा रसादेरस्वाद्यत्वं भाविके तु भूतभाविनोरत्यद्भुतार्थयोस्सर्वज्ञवत्ताटस्थ्येनैव प्रतीतिर्नसाधारण्येन। नन्वत्र भूतभाविनोरप्रत्यक्षयोः प्रत्यक्षत्वेनाध्यवसायादिवादेरभावाच्च। प्रतीयमानोत्प्रेक्षा कुतो न स्यादिति चेन्न नह्यप्रत्यक्षं प्रत्यक्षत्वेना-

ध्यवसीयते किं तर्हि काव्यार्थपरिशीलयितृभीरसिकधौरेयैः प्रत्यक्षं विधुरपरिभावितकामिनीसाक्षात्कारवद्दृश्यते । नापिभ्रान्तिमदलङ्कारेण कबळीक्रियते । काव्याभ्यासनैरन्तर्यविशदीकृतमनोमुकुराणां रसिकानां भूतभाविवस्तुसाक्षात्कारसामग्रीरूपाया भावनाया भ्रान्तिजनकत्वाभावात्। नचात्र प्रसादाख्यो गुण इति वक्तुं युक्तं भूतभाविनोः प्रत्यक्षा-यमाणत्वे प्रसादस्याहेतुत्वात्, अतएतात्याद्भुतो रस इति लपितुं सांप्रतं विस्मयरूपं चमत्कारं प्रत्यस्य हेतुत्वात् चमत्कारयोगे रसरूपताया असम्भवात् । भावनावशेनैव सहृदयहृदये तथैवोदीयमानतया न विरोधाभासोऽपि भवितुं प्रभवतीति सर्वालङ्कारसरण्युत्तीर्णोऽयं भावि-कालङ्कारो रुद्रटमम्मटादिभिरुररीकृत इति सहृदयास्स्वान्ते समालो-चयन्त्विति ॥

महाविद्वान् क. गोपालकृष्णशास्त्री.

# माहिषेयकृतं तैत्तिरीयप्रातिशाख्यभाष्यम् *

कृष्णयजुःप्रातिशाख्यस्य तैत्तिरीयप्रातिशाख्यापरपर्यायस्याद्यावधि व्याख्याने द्वे केवलमुपलब्धे । तत्राद्यं त्रिभाष्यरत्नमिति । द्वितीयं वैदिकाभरणमिति । सांप्रतन्तु तृतीयमपि भाष्यं पदक्रमसदनाख्यं माहिषेयकृतं मद्रपुरीयविश्वविद्यालयात्प्रकाशितमुपलभ्यते । इदं च भाष्यं त्रिभाष्यरत्ननामकात् व्याख्यानात्प्राचीनं तद्व्याख्यानस्यैव मूलभूतमिति च त्रिभाष्यरत्नस्योपक्रम एवावगम्यते । यथोक्तं त्रिभाष्यरत्नकृता—

व्याख्यानं प्रातिशाख्यस्य वीक्ष्य वाररुचादिकम् ।
कृतं त्रिभाष्यरत्नं यद्भासते भूसुरप्रियम् ॥ इति ।

अत्र वाररुचादिकम् इत्यादिशब्देन आत्रेयमाहिषेयभाष्ये गृह्येते । अत एव त्रिभाष्यरत्नमिति नाम्न उपपत्तिः इति च ॥

इत्थं च वररुचिकृतमात्रेयकृतं च तैत्तिरीयप्रातिशाख्यस्यान्यदपि भाष्यद्वयमस्तीत्यनेनैव वचनेन ज्ञायते । अथापि तद्भाष्यद्वयमद्यावधि विरळप्रचारतया न समुपलभ्यते ॥

इदं च भाष्यं त्रिभाष्यरत्नमेवानुरुणद्धि न वैदिकाभरणं । यतस्त्रिभाष्यरत्नवदेवात्रापि, वर्णसमाम्नाये षोडश स्वरात्राः, पञ्चविंशतिः स्पर्शाः; चतस्रोऽन्तस्थाः, षडूष्माणः, अनुस्वारः, विसर्जनीयः, रङ्गाख्यः प्लुतः, ळकारः, चत्वारो यमाः, स्वरभक्तिः, इति षष्टिसङ्ख्या वर्णा अङ्गीकृताः । वैदिकाभरणकारस्तु रङ्गसंज्ञकं प्लुतं स्वरभक्तिं

---

* प्राप्तिस्थानं—मद्रपुरीयविश्वविद्यालयः, मूल्यं रूप्यकद्वयम्.

च पृथगपरिगणयन् चतुर्णां यमानां स्थाने पञ्च नासिक्यान् परिगणयन् एकोनषष्टिर्वर्णा इत्यङ्गीचकार ॥

इदमपरं ज्ञापकमस्य भाष्यस्य त्रिभाष्यरत्नसारूप्ये । यतश्चात्रापि त्रिभाष्यरत्नवदेव जटायाः प्रातिशाख्यविषयत्वमभ्युपगतम् । अत एव माहिषेयः—

**इतिपरोऽपि इति सूत्रं रेफादेशविधिपरं व्याख्याय, इति श्रुतः इति क्रमस्य जटायां श्रुतरिति इत्येवमुदाजहार । एवमन्यत्रापि । वैदिकाभरणकारस्तु प्रातिशाख्यस्य जटाविषयकतामसहमानः इति परोऽपि इति सूत्रं बह्वृचादिमतान्तराभिप्रायेण अबिभस्तं इति संहितायाः पदाध्यायकाले अबिभरिति—तं इत्येवं, इतिकरणविधिपरतया व्याचख्यौ । एवमन्यत्रापि ॥**

ननु यद्यस्मिन्भाष्ये जटापि लक्षणशास्त्रविषयतया प्रतिपाद्यते अथ कथं पदक्रमसदनमिति भाष्यनाम्न उपपत्तिः? इति चेत् पदक्रमयोः प्राधान्यतः प्रतिपाद्यत्वाभिप्रायेणेति वदामः । अत एव त्रिभाष्यरत्नवत् वैदिकाभरणवच्च संहिताविषयकत्वमप्यस्य भाष्यस्य युक्तं । यतश्च अथ संहितायां इत्यधिकृत्य विधीयमाना कार्यविधयः संहिताविषयकतयैवात्राप्युपपाद्यन्ते ॥

इदं चान्याल्लिंगमस्य भाष्यस्य त्रिभाष्यरत्नसारूप्ये । यतास्त्रिभाष्यरत्नकारवदेव प्रग्रहाध्यायैकादशसूत्रगतस्य विशाखे-ग्रहणस्य—

**विशाखे नक्षत्रं इत्युदाहरणं दत्वा वीति किं? तस्मिन्त्सहस्रशाखे इति प्रत्युदाहरन्माहिषेयोऽपि तैत्तिरीयब्राह्मणाऽऽरण्यकयोरप्येतत्प्रातिशाख्यवि - षयतां व्यक्तमेवाहेति । तत्सूत्रे वीत्यस्य व्यावर्त्यं शाखान्तरे इति वदंस्तु वैदिकाभरणकारः शाखा-न्तरीयसंहितावाक्यमेव प्रत्युदाहारणमिति मन्यते । अत एव श्रृत उत्स्नाति जनिता मतीनां इति ब्राह्मणवाक्ये उत्पूर्वस्सकारो व्यञ्जनपरः इति सूत्रेण सकारस्य लोपप्रसङ्गमाशंक्य संहिताग्रन्थ-मात्रविषयत्वादस्य शास्त्रस्य इति समाहितं वैदि-काभरणकृता ॥**

इत्थमेव प्रायोऽन्यत्रापि त्रिभाष्यरत्नसारूप्यं क्वचित् क्वचित् वैदिकाभरणवैरूप्यं चास्मिन्भाष्य उदीक्ष्यते । तदेवंकेषुचिद्विषयेषु त्रिभाष्यरत्नमाहिषेयभाष्ययोः वैदिकाभरणस्य च सत्यपि विसंवादे त्रीण्यप्येतान्यवश्यमेव वैदिकैराधिगन्तव्यानि । यतस्त्रिष्वप्येतेषु पदाव-

ग्रहप्रग्रहाऽप्रग्रहक्रमसंहितास्वरसंध्यादीनां लक्षणानि सम्यगवबुध्यन्ते।
प्रकृतभाष्ये चायं विशेष उच्यते—

अयन्तु प्रकृते भाष्ये गुणो वैशेषिकोभवेत्।
यदत्र विस्तराभावात्सूत्रार्थानां सुबोधता॥

इति। अतश्च इदं भाष्यं बालानामपि लक्षणजिज्ञासूनां विना प्रयासं लक्षणशास्त्रे व्युत्पत्तिं जनयत्येवेति सुदृढं वक्तुं प्रभवामः इतिशम्॥

**कृष्णघनपाठी,**
महाराजसंस्कृतमहापाठशालायजुर्वेदाध्यापकः.

## गुरुशिष्यभावः

---

### प्रथम आश्वासः

I

श्रेष्ठः अध्यापकाः (=पाठयितारः)—

१ वेद
२ वेदान्तसारार्थतत्त्ववित्
३ श्रुतिपारगः
४ सततं वैदिकाचारनिरतः
५ शास्त्रपारगः ।
६ शान्तः
७ दान्तः
८ जितक्रोधः
९ जितामित्रः
१० जितेन्द्रियः ।
११ वेदाध्ययनकृत् नित्यं
१२ वेदार्थस्य विचारकृत्
१३ स्वशिष्य
१४ पुत्रवात्सल्यसहितः
१५ ब्रह्मवित्तमः ।
१६ अहर्निशंश्रुतेर्जापी
१७ श्रौताचाररतः सदा ।
१८ अहिंसारहितः नित्यं—
१९ ब्रह्मतत्त्वार्थचिन्तकः ।
२० शिव .
विष्णोवोरभेदेन नित्योपास्ति-
रतः .
२१ द्विजः ।
२२ महाकुलप्रसूतः (च)
गुरुः इत्युच्यते बुधैः ।"
(अगस्त्यसंहितायां)

१ "सहस्रकृत्वो गायत्रीजप-
कर्ता दिनेदिने ।
२ अनसूयः
६ जितक्रोधः
४ वेदाध्ययनकृत् सदा ।
५ सर्वागमरहस्यज्ञः

गुरुरुक्तः महानयम् ।"

(तत्रैवान्यत्र)

"प्रपित्सु —

१ मन्त्रनिरतं
२ प्राज्ञं
६ हितकरं
४ शुचिम् ।
५ प्रशांतं
६ नियतं वृत्तौ
७ भजेद्द्विजवरं गुरुम् ।"

(दाशरथिसंहितायाम्)

१ मातृतः
२ पितृतः शुद्धः
३ शुद्धभावः
४ जितेन्द्रियः ।
५ सर्वागमानां सारज्ञः
६ सर्वशास्त्रार्थतत्त्ववित् ।
७ परोपकारनिरतः
८ जप
९ पूजादितत्परः ।
१० अमोघवचनः
११ शांतः
१२ वेद
१३ वेदाङ्गपारगः ।
१४ शान्तः
१५ दान्तः
१६ कुलीनः (च)
१७ विनीतः
१८ शुद्धवेषवान् ।
१९ शुद्धाचारः
२० सुप्रसिद्धः
२१ शुचिः
२२ दक्षः
१३ सुबुद्धिमान् ।

गुरुरित्युच्यते देवि सर्वलोक-
हिते रतः ।"

(शङ्करसंहितायाम्)

१ अवदातान्वयः
२ शुद्धः
३ स्वोचिताचारतत्परः ।
४ आश्रमी
५ क्रोधरहितः
६ वेदवित्
७ सर्वशास्त्रवित् ।
८ तत्त्वज्ञः यन्त्र—
९ मन्त्राणां
१० मन्त्रभेत्ता
११ रहस्यवित् ।

१२ पुरश्चरणकृत्
१३ होम—मन्त्रसिद्धः ।
१४ प्रयोगवित् ।
१५ तपस्वी
१६ सत्यवादी (च)
१७ गृहस्थः
१८ गुरुरुच्यते । यः समः सर्वभूतेषु
१९ विरागी
२० गतमत्सरः ।
२१ जितेन्द्रियः
२२ शुचिः
२३ दक्षः
२४ सर्वाङ्गावयवान्वितः ।

(अन्यत्र)

१ पिता
२ माता (तथा)
३ भ्राता
४ साङ्गवेदोपदेशकृत् ।
चत्वारः गुरवः प्रोक्ताः
पूज्याः प्रत्यहमादरात् ।"

(ततोऽन्यत्र)

१ "अध्यापकः (च) वेदानां
२ वेदार्थप्रतिबोधकः ।
३ शास्त्रवक्ता
४ धर्मवक्ता
५ नीति—
६ शास्त्रोपदेशकः ।
७ मन्त्रोपदेश—
८ व्याख्याकृत्
९ वेदसन्देहहृत् (तथा) ।
१० व्रतोपदेशकः (चैव)
११ भयत्राता (ताअ)
१२ (अ)न्नदः (अपिच) ।
१३ श्वशुरः
१४ मातुलः (चैव)
१५ ज्येष्ठभ्राता
१६ पिता (तथा) ।
१९ उपनेता
२० निषेक्ता च
२१ संस्कर्ता मित्रसत्तम ।
एते (हि) गुरुवः प्रोक्ताः
पूज्या वंद्याः (च) सादरम् ।

(बृहन्नारदीये)

II

अध्यापनयोग्या विद्यार्थिनः, तेषां गुणा वा—

१ "अद्रुतम्
२ अविलम्बितम्
३ अविशङ्कितम्
४ अनुनासिकम्
५ व्यक्ताक्षरम्
६ अपीडितवर्णम्
७ अक्षि
८ भ्रुवौ (भ्रओ)
९ (ओ) ष्ठ–
१० हस्तैः—अनभिनीतं
११ सुसंस्कृतम्
१२ नात्युच्चैः—
१३ नातिनीचैः (च)–स्वरैः पठेत्
१४ न चान्तरेण कश्चिद्व्रजेत् तयो-
रधीयानयोः ।
१५ शुचिः
१६ गुरुपरः
१७ दक्षः
१८ तन्द्रा—
१९ निद्रा–विवर्जितः पठेत् ।
एतेन विधिना शिष्यः
शास्त्रान्तमाप्नुयात् ।

२० वाक्यसौष्ठवे
२१ अर्थविज्ञाने
२२ प्रागल्भ्ये
२३ प्रयोग (कर्म)—नैपुण्ये
२४ तदभ्यासे
२५ सिद्धौ (च) यतेत ।
—(स्मृत्यन्तरे)

१ माधुर्यम्
२ अक्षरव्यक्तिः
३ पदच्छेदस्तु सुस्वरः ।
४ धैर्यम्
५ लयसमर्थं (च) षडेते
पाठका गुणाः ।"
—(पाणिनिशिक्षायाम्)

१ अव्यापन्नेन्द्रियम्
२ निभृतम्
३ अनुद्धतम्
४ अव्यसनिनम
५ शौच—
६ शीलाऽऽ
७ (आ) चाराऽ
८ (अ) नुराग

९ दाक्ष्य
१० प्रादक्षिण्योपपन्नम्
११ अध्ययनाभिकामम्
१२ अत्यर्थदर्शनैकानन्यकार्यम्
१३ अलुब्धम्
१४ अनलसं
१५ सर्वभूतहितैषिणम्
१६ आचार्य सर्वानुशिष्टिप्रति-
करम्
१७ अनुरक्तम्
एवं गुणसमुदितमध्याप्यमे-
वाहुः ।
—(अन्यत्र)

१ शुचये
२ कृतोत्तरासंगाय
३ अव्याकुलाय
४ नियमेन—उपस्थिताय
शिष्याय
क्रमेण यथाशक्ति गुरुरुपदि-
शेत् पदं पादं श्लोकं
वाक्यं तदर्धं वा ।"
—(तत्रेपि)

१ "द्विज—दरिद्र
२ मित्र
३ प्रव्रजितोपनत
४ द्विज—साध्व(धुअ)
५ ,, (अ) नाथाभ्युपगता-
नाम् आत्मबान्धवानां
पुत्रादीनामिव अध्यापनं
कर्तव्यम् । एवं हि साधु
भवति ।
एवं हि विद्या प्रकाशेत ।

१ मित्र
२ यशः
३ धर्मा(र्मअ)
४ (अ)र्थं
५ कामां(श्च)प्राप्नुयात् ।
(सुश्रुते

१ "शास्त्रं
२ प्रज्ञा
३ धृतिः
४ दाक्ष्यं
५ प्रागल्भ्यं
६ धारयिष्णुता ।
७ उत्साहः
८ वाग्मिता
९ औदार्यम्
१० आपत्कालसाहिष्णुता ।

११ प्रभावः
१२ शुचिता
१३ मैत्री
१४ त्यागः
१५ सत्यं
१६ कृतज्ञता ।
१७ कुलं
१८ शीलं
१९ दमः(चेति)
गुणाः सम्पत्ति [विद्यादि-सम्पत्ति] हेतवः"
(आग्नेयपुराणे)

१ "ब्राह्मण-
२ क्षत्रिय-
३ वैश्यानाम्—अन्यतमम्
४ अन्वय-
५ वयः-
६ शील-
७ शौर्य-
८ शौचाऽऽ-
९ (आ) चार-
१० विनय-
११ शक्ति-
१२ बल-
१३ मेधा
१४ धृति
१५ स्मृति
१६ मति
१७ प्रतिपत्तियुक्तं
१८ तनुचिह्वौ (ह्वाओ)
१९ (ओ)ष्ठ
२० दन्ताग्रम्
२१ ऋजुशक्ताऽ
२२ (अ)क्षि
२३ नासम्
२४ प्रसन्नचित्त
२५ वाक्
२६ चेष्टं
२७ क्लेशसहं (च) शिष्यमुपनयेत् ।
(व्वैद्यते)

१ "विद्यानुरक्तिः
२ आरोग्यं
३ विनयो (यउ)
४ (उ)द्यम
५ बुद्धयः ।
६ एकाग्रता इति षट् ज्ञेयाः धन्यानां पाठहेतवः ।"

१ "नात्युच्चैः
२ नातिनीचैः (च)
३ नानेकमनाः सदा ।
४ नविच्छिन्नपदं (चैव)
५ नास्पष्टं पाठकः पठेत् ।"
(लैङ्गे)

१ "काम
२ क्रोध
३ लोभ
४ मोह
५ मानाऽ
६ (अ) हङ्कारे (र्ई)
७ (ई)र्ष्या
८ पारुष्य
९ पैशुन्याऽ
१० (अ) नृताऽऽ
११ (आ)लस्याऽ
१२ (अ)यशस्यानि हित्वा
१३ नीचनख
१४ रोम्णा
१५ शुचिना
१६ शुद्धवाससा
१७ सत्य
१८ व्रत
१९ ब्रह्मचर्याऽ
२० (अ)भिवादन तत्परेणावश्यं भवितव्यम् ।
२१ गुर्वनुमतस्थानगमन
२२ शयनाऽऽ
२३ (आ)सन
२४ भोजनाऽ
२५ (अ)ध्ययनपरेण भूत्वा
२६ गुरुप्रिय
२७ हितेषु—वर्तितव्यम्
२८ अतोन्यथा वर्तमानस्य शिष्यस्य (विद्यार्थिनः)—अधर्मो भवति
२९ अफला(च)विद्या
३० न च प्राकाश्यं प्राप्नोति"
(सुश्रुते)

१ "कृतज्ञाः
२ शुचयः
३ प्राज्ञाः
४ क्रोध
५ द्रोहविवर्जिताः ।
६ (गुरुभिः)त्यक्तशाठ्याः (च)
७ पाठ्याः शिष्याः विवेकिनः ।"
(विवेकविलासे)

१ "शिष्यः
२ शुद्धान्वयः
३ श्रीमान्
४ विनीतः
५ प्रियदर्शनः
६ सत्यवाक्
७ पुण्यचरितः
८ दयाधीः
९ दम्भवर्जितः ।
१० काम
११ क्रोधपरित्यागी
१२ भक्तः(च)गुरुपादयोः ।

इत्यादिलक्षणैर्युक्तः शिष्यो भवति नान्यथा ।"

(पाद्मे)

१ "हयानामिव जात्यानामर्ध-
रात्रार्धशायिनाम् ।
न(हि)विद्यार्थिनां निद्रा चिरं
नेत्रेषु तिष्ठति ।
२ न भोजनविलम्बी स्यात् ।
३ न(च)नारीनिबन्धनः ।
४ सुदूरमपि कष्टेन व्रजेत् गुरु-
गृहं त्वरन् ।"

(बृहन्नारदीये)

---

## III

विद्यार्थिनाम् (अन्येषामपि) उपदेशः—

"आत्महितं चिकीर्षता विद्यार्थिना (अन्येनापि)
सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् ।

सद्वृत्तानि—

१ देव
२ गो
३ ब्राह्मण
४ गुरु
५ वृद्ध
६ सिद्धाऽऽ
७ (आ)चार्यानर्चयेत् ।
८ अग्निमुपाचरेत्

९ द्वौकालावुपस्पृशेत् ।

१०-१२ मलायतनेषु द्वादशसु अभीक्ष्णं पादयोः (च) वैमल्यमादध्यात् ।

१३ नित्यमनुपहतवासाः

१४ सुमनाः (च) स्यात् ।

१५ परपरुषवचनसहिष्णुः ।

१६ राग

१७ द्वेष—हेतुहन्ता ।

१८ नानृतं ब्रूयात् ।

१९ नान्यस्वमादद्यात् ।

२० नान्यस्त्रियमभिलषेत्, पश्येत् (च) ।

२१ न वैराय रोचयेत् ।

२२ न कुर्यात्पापम् ।

२३ नान्यदोषान् ब्रूयात् ।

२४ नान्यरहस्यमागमयेत् ।

२५ नाधार्मिकैस्सहासीत ।

२६ न राजद्विष्यैः सहासीत ।

२७ नोन्मत्तैः ,,

२८ न पतितैः

२९ न भ्रूणहन्तृभिः

३० न क्षुद्रैः

३१ न दुष्टैः

३२ न दुष्टयानान्यारोहेत् ।

३३ नानास्तीर्णम्

३४ अविशालम्

३५ असमम् (वा) शयनं प्रपद्येत ।

३६ न द्रुममारोहेत् ।

३७ न च लोग्रवेगमवगाहेत जलं ।

३८ नोच्चैर्हसेत् ।

३९ न शब्दवन्तं मारुतं मुञ्चेत् ।

४० नासंवृतमुखः जृम्भां

४१ क्षवथुं हास्यं (वा) प्रवर्तयेत् ।

४२ न नासिकां कुष्णीयात् ।

४३ न दन्तान् विघट्टयेत् ।

४४ न नखान्वादयेत् ।

४५ न भूमिं विलिखेत्

४६ न तृणं छिन्द्यात् ।

४७ न लोष्टं मर्द्दीयात् ।

४८ ज्योतींषि

४९ अग्नि—अमेध्यम्

५० अशस्तं (च) नाभिवीक्षेत ।

—(धर्मशास्त्रेषु)

इति प्रथम आश्वासः

द्वितीय आश्वासः

I

आध्यापनानर्हा विद्यार्थिनः । तेषां दोषा वा—

"न कराळः(ल)
न लम्बोष्ठः
नाव्यक्तः
नानुनासिकः ।
गद्गदः
बद्धजिह्वः(च)
न वर्णान् वक्तुमर्हति"
(याज्ञवल्क्यशिक्षायाम्)
"पापिने—
१ क्रूरचेष्टाय
२ शठाय
३ कृपणाय(च)
४ दीनाय
५ आचारशून्याय
६ मन्त्र(शास्त्र) (वेद) द्वेषपराय (च) ।
७ निन्दकाय(च)
८ मूर्खाय
९ तीर्थद्वेषपराय(च) ।
१० भक्तिहीनाय(देवेशिनदेया)
११ मलिनाय(च)। विद्येतिशेषः।
(तत्र

II

१ "चर्वणं
२ गिलनं(चापि)
३ कासितं
४ श्वसितं(तथा) ।
५ नीचो(चउ)
६ (उ)च्चं(चापि)
७ अगम्भीरं
वर्जयेत्पाठकः सुधीः"
(हारीतस्मृतौ)

१ "गुरुष्वविनयः
२ धर्मे द्वेषः
३ स्वगुणैर्मदः ।
४ गुणिषु द्वेष
५ मात्सर्या(यैअ)
६ (अ)सूयाः स्युः
विषवत्स्मृताः ।
(वसिष्ठस्मृतौ)

१ "अव्यवसायिनम्
२ अलसं
३ दैवपरं
४ साहसात् (च)परिहीनम् ।
प्रमदेव वृद्धनाथं नेच्छत्युप-
गूहितुं विद्या ।"
(सुभाषिते)

१ "गीती
२ शीघ्री
३ शिरःकम्पी(तथाऽ) ।
४ (अ)लिखितपाठकः
५ अनर्थज्ञः=अर्थज्ञानरहितः
६ अल्पकण्ठः(च)
षडेते पाठकाधमाः
(पाणिनीयशिक्षायाम्)

१ "द्यूतं(च)
२ पुस्तकं२
३ वाद्यं
४ नाटकेषु(च)सक्तिका ।
५ स्त्रियः
६ तन्द्रा(च)
७ निद्रा(च)
विद्याविघ्नकराणि षट्"
(नारदशिक्षायाम्)

१ "न शठाः प्राप्नुवन्त्यर्थान्
२ न क्लीबाः
३ न च मानिनः ।
४ न च लोकरवाद्भीताः
५ न च श्वःश्वः प्रतीक्षकाः"
(नारदीयशिक्षायाम्)"

१ "शोकः
२ क्रोधः(च)
३ लोभः(च)
४ कामः
५ मोहः
६ परासुता—परतत्परत्वमित्यर्थः
७ ईर्ष्या
८ मानः
९ विचिकित्सा(च)
१० हिंसाऽ

११ (अ)सूया

१२ जुगुप्सता ।

द्वादशैते बुद्धिनाशहेतवो मानसा मलाः ”

(कालिकापुराणे)

१ “ आलस्यात्

२ मूर्खसंयोगात्

३ भयात्

४ रोगनिपीडनात् ।

५ अत्यशक्त्या(च)

६ मानात् (च)

षड्भिर्विद्या विनश्यति

१ कामः

२ क्रोधः(तथा)

३ लोभः

४ हर्षः

५ मानः

६ मदः(तथा) ।

षड्वर्गमुत्सृजेदेनम्––अस्मिंस्त्यक्ते सुखी नरः ”

(माण्डूकशिक्षायाम् )

१ “ कामं

२ क्रोधं(तथा)

३ लोभं

४ स्वादु

५ शृङ्गार

६ कौतुकम्

७ आलस्यम्

८ अतिनिद्रां(च)

विद्यार्थी(हि)अष्ट वर्जयेत् । ”

(सुभाषिते)

१ “ परस्त्रीनिरतः

२ दुष्टः

३ परद्रव्यापहारकः ।

४ आचार्यस्य सकृद्वापि मिथ्याभाषणतत्परः ।

५ वेदनिन्दापरः नित्यं

६ मूर्खः

७ आचार्यनिन्दकः ।

८ अर्थलुब्धः

९ क्रोधशीलः

१० कामुकः

११ श्रुतिवर्जितः ।

परित्यजेदमून् शिष्यानपि सर्वस्वदायकान् ”

( दाशरथिसंहितायाम् )

१ “ अलसाः

२ मलिनाः

३ क्लिष्टाः
४ दाम्भिकाः
५ कृपणाः(तथा) ।
६ दरिद्राः
७ रोगिणः
८ अतुष्टाः
९ रागिणः
१० भोगलालसाः ।
११ असूया-
१२ मत्सरग्रस्ताः
१३ शठाः
१४ परुषवादिनः ।
१५ अन्यायोपार्जितधनाः
१६ परदाररताः(च ये) ।
परित्यजेदमून् शिष्यान् कदा-
पि कृपया गुरुः"
(नगृह्णीयात्)
(अगस्त्यसंहितायाम्)

१ "दांभिकं
२ भिन्नमर्यादं
३ नास्तिकं
४ लुब्धचेतसम्
विद्वान्नैवानुगृह्णीयात्तं शिष्यं
नरकप्रदम्"
(नारदीयपुराणे)

१ "धर्माऽ
२ (अ)र्थौ यत्र न स्यातां
२ शुश्रूषावापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं
बीजमिवोषरे ।"
(मनुस्मृतौ)

शुश्रूषारहिता विद्या ह्यपि मे-
धागुणैर्युता । वन्ध्येव
युवती तस्य न विद्या
फलिनी भवेत् ॥
(नारदशिक्षायाम्)

१ "आलस्यं
२ मद
३ मोहौ(च)
४ चापलं
५ गोष्ठिः(एवच) ।
६ स्तब्धता(च)
७ अभिमानित्वं(तथा)
८ त्यागित्वम्, (अत्यागित्वम्)
(एवच) ।
एते वै सप्त(अष्ट) दोषाः
स्युः सदा विद्यार्थिनां
मताः"
(उद्योगपर्वणि)

"पञ्च विद्यां न गृह्णन्ति—
१ जडाः
२ स्तब्धाः(च ये नराः) ।
३ अलसाः(च)
४ अतिरोगाः (च येषां वै)
५ विस्मृ (निःसृ) तं (चञ्चलं) मनः"
(याज्ञवल्क्यशिक्षायाम्)

इति द्वितीय आश्वासः

(अनुवर्तते).

धर्माधिकारी काशी शेषवेङ्कटाचलशास्त्री.

# कांच्यां--श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

## वैदिक ग्रन्था:.

| नं. | नाम | रू. | आ. |
|---|---|---|---|
| 1 | श्रीसूक्तभाष्यम् | 0 | 4 |
| 2 | पुरुषसूक्तभाष्यम् | 1 | 0 |
| 3 | तैत्तिरीयोपनिषद्भाष्यम्. | 3 | 0 |
| 4 | सन्ध्यावन्दनभाष्यम् | 0 | 8 |

## वेदान्त ग्रन्था:.

| नं. | नाम | रू. | आ. |
|---|---|---|---|
| 5 | शतदूषणी भा--1 | 4 | 6 |
| 6 | शतदूषणी भा—2 | 3 | 12 |
| 7 | शतदूषणी भा—3 | 3 | 12 |
| 8 | शतदूषणी भा—4 | 3 | 12 |
| 9 | भगवद्गीता प्रतिपदार्थविवरणसहिता. | 2 | 2 |
| 10 | भगवद्गीता-वरवरमुनि व्याक्यासहिता. | 2 | 4 |
| 11 | गीतार्थसंग्रह:-रक्षया सहित:. | 0 | 6 |
| 12 | तत्वनिर्णय: (शैववैष्णववाद:). | 0 | 4 |
| 13 | सिद्धान्तचिन्तामणि: | 0 | 12 |
| 14 | पाराशर्यविजय: (प्रथमाध्यायप्रथमपाद:). | 4 | 0 |
| 15 | वेदान्तविजय: [गुरुविद्याविज:, ब्रह्मविद्याविजय:, सद्विद्याविजय:, अद्वैतविद्याविजय:, परिकरविजय:] (यन्त्रस्थ:) | | |
| 16 | यतिलिङ्गसमर्थनम् | 0 | 4 |
| 17 | प्रपन्नपारिजात: | 0 | 4 |
| 18 | न्यायभास्कर: (जगन्मिथ्यात्वखण्डनम्) | 1 | 8 |
| 19 | भेदवाद:तत्क्रतुन्यायविचारश्च. | 0 | 4 |
| 20 | दृश्यत्वानुमाननिरासवाद:मोक्षकारणतावादश्च. | 0 | 4 |
| 21 | कार्याधिकरणवाद: भा—1. | 0 | 10 |
| 22 | कार्याधिकरणवाद: भा—2. | 1 | 0 |
| 23 | कार्याधिकरणतत्वम् | 0 | 14 |
| 24 | श्रीरामानुजासिद्धान्तसार:. | 1 | 0 |
| 25 | श्रुतितात्पर्यनिर्णय: (यन्त्रस्थ:). | | |

## मीमांसा ग्रन्था:.

| नं. | नाम | रू. | आ. |
|---|---|---|---|
| 26 | भाट्टरहस्यम् | 1 | 8 |
| 27 | मीमांसापादुका | 0 | 7 |
| 28 | मीमांसाकौस्तुभ: भा—1. | 1 | 4 |
| 29 | मीमांसाकौस्तुभ: भा—4. | 1 | 6 |
| 30 | मीमांसाकौस्तुभ: भा—5. | 1 | 6 |
| 31 | सेश्वरमीमांसा | 1 | 14 |

| नं | नाम | रू. | आ. |
|---|---|---|---|

## न्याय ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 32 | प्रामाण्यवादः | 3 | 4 |
| 33 | अवच्छेदकतानिरुक्ति | 0 | 14 |
| 34 | बाधगादाधरी | 0 | 15 |
| 35 | मूलगदाधरीये शब्दखण्डः. | 1 | 4 |
| 36 | उपाधिवादः गदाधरस्य. | 2 | 0 |
| 37 | गादाधरी चतुर्दशलक्षणी. | 1 | 14 |
| 38 | गादाधरी पञ्चलक्षणी | 0 | 8 |
| 39 | सिद्धान्तलक्षणम् | 1 | 4 |
| 40 | पक्षता-गादाधरी | 1 | 8 |
| 41 | व्युत्पत्तिवादः | 2 | 8 |
| 42 | సవ్యభిచారసామాన్య నిరుక్తిః | 1 | 0 |
| 43 | सामान्यनिरुक्तिः | 0 | 12 |
| 44 | पदवाक्यरत्नाकरः | 2 | 8 |
| 45 | సాధారణాసాధారణా నుపసంహారిగ్రంథః | 1 | 0 |
| 46 | तत्वचिन्तामणौ अवयवग्रन्थः. | 1 | 0 |
| 47 | सत्प्रतिपक्षग्रन्थः | 0 | 14 |
| 48 | शतकोटिः | 0 | 6 |
| 49 | शतकोटिखण्डनम् श्रीकृष्णताताचार्य वि. | 0 | 6 |
| 50 | शतकोटिखण्डनम् श्रीमदनन्ताचार्यवर्य कृतम्. | 0 | 12 |
| 51 | शतकोटिमण्डनम् विजयराघवाचार्य वि. | 1 | 0 |

## पाञ्चरात्र ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 52 | सात्वतसंहिता | 2 | 8 |
| 53 | ईश्वरसंहिता | 7 | 8 |
| 54 | पारमेश्वरसंहिता सव्याख्या. | 10 | 0 |

## सम्प्रदाय ग्रन्था.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 55 | तत्वत्रयम् | 0 | 4 |
| 56 | मुमुक्षुप्पाडिरहस्यम् | 0 | 4 |
| 57 | श्रीवचनभूषणम् | 0 | 8 |
| 58 | श्रीवादिभीकरवैभवम् (सचित्रम्.) | 0 | 6 |
| 59 | श्रीवादिभीकरवैभवम् (चित्ररहितम्). | 0 | 4 |
| 60 | आचार्य चर्यामृतम् | 0 | 8 |
| 61 | అష్టశ్లోకీ ప్రవచనం | 0 | 2 |
| 62 | அருளிச்செயல்ரஹஸ்யம் | 0 | 4 |
| 63 | ముక్తిభోగావళీ | 0 | 2 |
| 64 | సచ్చరిత్రపరిత్రాణం | 0 | 12 |
| 65 | ப்ரஹ்மவித்யா | 1 | 8 |
| 66 | விசிஷ்டாத்வைத ஸித்தாந்த ஸாரம் | 0 | 2 |
| 67 | தத்வமஸி | அச்சில் | |
| 68 | ஏகமேவாத்விதீயம் ப்ரஹ்ம | ,, | |

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 69 | வேதம் | 2 | 0 |
| 70 | மோக்ஷம் | 0 | 2 |

## आख्यायिकाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 71 | संसारचक्रम् भा 1 | 1 | 0 |
| 72 | संसारचक्रम् भा 2 | 0 | 12 |
| 73 | युगलांगुलीयम् | 0 | 6 |
| 74 | श्रीबदरिकाश्रमयात्रा वृत्तान्तः- | 3 | 0 |

## पुराण ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 75 | काञ्चीमाहात्म्यम् | 1 | 12 |
| 76 | కాఞ్చీమాహాత్మ్యము | 1 | 2 |
| 77 | [illegible] | | |
| 78 | महाभारते शान्तिपर्व (यन्त्रस्थः). | | |
| 79 | हरिवंशे शेषधर्मः (यन्त्रस्थः) | | |

## दिव्यप्रबन्ध व्याख्यान ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 80 | முதலாயிரம் வியாக்கியானம் 1வது பாகம் பெரியாழ்வார் திருமொழி வியாக்கியானம். | 5 | 0 |
| 81 | ஷை 2 பாகம் பெருமாள் திருமொழி திருசசந்த விருத்தம் திருமாலை, திருப்பள்ளியெழுச்சி, அமலனாதிபிரான், கண்ணிநுண் சிறுத்தாம்பு இவைகளின் வியாக்கியானம் (அச்சில்) | 5 | 0 |
| 82 | ஷை 3வது பா. இதில் திருப்பாவை நாச்சியார் திருமொழி, இவற்றின் வியாக்யானங்கள் இருக்கின்றன | 5 | 0 |

## कोश ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 83 | लिङ्गनिर्णयभूषणम् | 0 | 2 |

## इतर ग्रन्थाः.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 84 | वाल्मीकिभावदीपः | 1 | 0 |
| 85 | विष्णुसहस्रनामस्तोत्रम्. | 0 | 2 |
| 86 | लक्ष्मीसहस्रनामस्तोत्रम्. | 0 | 2 |
| 87 | सुभाषितकौस्तुभः | 0 | 4 |
| 88 | सप्तभङ्गीतरङ्गिणी (जैनग्रन्थः). | 0 | 10 |
| 89 | सर्वदर्शनशिरोमणिः | 0 | 3 |
| 90 | भस्मधारणविचारः | 0 | 2 |
| 91 | परतत्वनिर्णय | 0 | 2 |
| 92 | पाद्मोक्तालयाराधनविधिः. | 0 | 4 |
| 93 | Journal of P. B. Mutt Free. | | |
| 94 | History of P. B. Mutt Free. | | |
| 95 | यतिवन्दनसमर्थनम् | 0 | 4 |
| 96 | दुर्वादविधूननम् | 0 | 8 |
| 97 | [illegible] | 0 | 12 |
| 98 | एकादशीश्राद्धमीमांसा | 0 | 4 |
| 99 | बडबानलः | 0 | 8 |

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 100 | अन्तर्व्याप्तिबहिर्व्याप्ति विचारः. | 0 | 2 |
| 101 | ऐकशास्त्र्यमीमांसा | 0 | 7 |
| 102 | [illegible] | 0 | 2 |
| 103 | सुदर्शनमीमांसा | 0 | 10 |
| 104 | क्रियाकैरवचन्द्रिका | 2 | 8 |
| 105 | श्रीवैष्णवमतदूषणोद्धार. | 1 | 0 |
| 106 | [illegible] | 2 | 0 |
| 107 | भोजनकुतूहलम् यन्त्रस्थः. | | |
| 108 | श्रीभाष्यविमर्शनपरीक्षा. | 0 | 6 |

## हिन्दी भाषा की पुस्तकें.

| नं | नाम | रू. | आ. |
|---|---|---|---|
| 109 | यतिराजवैभव | 0 | 6 |
| 110 | उपनयनगायत्रीमीमांसापरीक्षा. | 0 | 6 |
| 111 | चक्रधारणप्रमाणसंग्रह. | 0 | 4 |
| 112 | श्रीरामानुजसम्प्रदाय की प्राचीनता. | 0 | 1 |
| 113 | विशिष्टाद्वैतसिद्धान्तसारसंग्रहः. | 0 | 1 |
| 114 | चक्रधारण क्यों करना चाहिये. | 0 | 1 |
| 115 | सन्ध्यावन्दनाविधि | 0 | 2 |
| 116 | व्रतोत्सवनिर्णय | 0 | 2 |
| 117 | तत्वोद्बोधन | 4 | 0 |
| 118 | मिथ्याआक्षेपोंकानिरास. | 0 | 2 |
| 119 | तिरुप्पल्लाण्डु | 0 | 4 |
| 120 | ऊर्ध्वपुण्ड्रधारणविधि. | 0 | 1 |
| 121 | श्रीपराशरविशिष्टपरमधर्मशास्त्र. | 0 | 12 |
| 122 | वेदान्तरहस्य | 0 | 4 |
| 123 | श्रीशाण्डिल्य विशिष्टपरमधर्मशास्त्र. | 0 | 12 |
| 124 | तप्तमुद्राधारण पर निर्णयसिन्धुकारकारकाफैसला. | 0 | 3 |
| 125 | दिव्यदेशाविवेचन | 0 | 1 |
| 126 | द्वन्द्वयुद्धसमीक्षा | 0 | 12 |
| 127 | वैदिकसर्वस्वकाविशेषाङ्क. | 1 | 8 |
| 128 | अद्वैतविवेचन | 1 | 4 |
| 129 | सत्यार्थप्रकाश और श्रीवैष्णवसम्प्रदाय. | 0 | 6 |
| 130 | श्रीभगवदाराधनविधिः. | 0 | 2 |
| 131 | तुलसीमाहात्म्यदीपिका. | 0 | 4 |
| 152 | पुरुषसूक्त (सटीक) | | |
| 133 | श्रीसूक्त ,, | | |
| 134 | ईशावास्योपनिषत् (सटीक). | | |

प्राप्तिस्थानम्—

श्रीसुदर्शनमुद्रायन्त्रालय,

CONJEEVARAM,

(*Madras.*)